म० 'द्वादश स्रुवाहुतीर्जुहोत्यापये स्वाहेति प्रतिमन्त्रं वाचयति वेति' ( का० १४।५।१ ) प्राजापत्यानि द्वादश यजूंषि। संवत्सराभिमानी प्रजापतिः स्तूयते तस्यैतानि नामानि। आप्नोतीत्यापिस्तस्मै सुहुतमस्तु । शोभनमाप्नोतीति स्वापिः तस्मै। अपि जायते पुनःपुनरुत्पद्यते इत्यपिजस्तस्मै स्वाहा। क्रतुः संकल्पो भोगादिविषयो यज्ञो वा तस्मै। वसवे निवासहेतवे। अह्नां दिवसानां पतिरहर्पतिस्तस्मै। अतश्चत्वारि नामान्युभयविशेषणविशिष्टानि । 'मुह वैचित्ये' मुह्यतीति मुग्धस्तस्मै। अह्ने दिवसाय। विनश्यन्तीति विनंशिनः विनाशशीलाः पदार्थाः । 'मस्जिनशोर्झलि' ( ७।१।६० ) इति छान्दसत्वादझल्यपि नुमागमः। विनंशिषु भवो वैनंशिनस्तस्मै। मुग्धाय मोहकाय स्वाहा। अन्ते भवमन्त्यमन्त्यं च तदयनं च अन्त्यायनमन्त्यस्थानं तत्र भव आन्त्यायनस्तस्मै विनंशिने विनाशशीलाय स्वाहा । अन्ते भवोऽन्त्यः भुवने भवो भौवनस्तदुभयविशिष्टाय स्वाहा। भुवनस्य पतये जगतः पालयित्रे। अधिपतये सर्वलोकानां स्वामिने स्वाहा सुहुतमस्तु ॥ २० ॥

आ॒यु॑र्य॒ज्ञेन॑ कल्पतां प्रा॒णो य॒ज्ञेन॑ कल्पतां॒ चक्षु॑र्य॒ज्ञेन॑ कल्पता॒ᳫ्ँश्रोत्रं॑ य॒ज्ञेन॑ कल्पतां पृ॒ष्ठं य॒ज्ञेन॑ कल्पतां य॒ज्ञो य॒ज्ञेन॑ कल्पताम् । प्र॒जाप॑तेः प्र॒जा अ॑भूम॒ स्व॑र्देवा अगन्मा॒मृता॑ अभूम ॥ २१ ॥

[ आयु॑ः । य॒ज्ञेन॑ । क॒ल्पता॒म् । प्रा॒णः । चक्षु॑ः । श्रोत्र॑म् । पृ॒ष्ठम् । य॒ज्ञः । य॒ज्ञेन॑ । क॒ल्पता॒म् । प्र॒जाप॑ते॒रिति॑प्र॒जाप॑तेः । प्र॒जाऽइति॑प्र॒जाः । अ॒भू॒म॒ । स्व॑ः । दे॒वाः॒ । अग॑न्म । अ॒मृता॑ः । अ॒भू॒म॒ ॥ २१ ॥ ]

वाजपेय-याग से मेरी आयु कल्पित होवे। यज्ञ के द्वारा प्राण कल्पित होवे। चक्षु यज्ञ से कल्पित होवे। श्रोत्र यज्ञ से कल्पित होवे। पीठ या पृष्ठवंश यज्ञ से कल्पित होवे। यज्ञ यज्ञ से कल्पित होवे। यज्ञ से यज्ञ=विष्णु कल्पित होवे। ( पत्नी और यजमान सीढ़ी से यूप के ऊपर चढ़ें )। हम प्रजापति देव की प्रजा हो गए। ( गेहूँ के आटे से बना हुआ अपूप या गूझा यजमान छुए )। हे देवो! हम स्वर्ग को प्राप्त हुए। हम अमर हो गए। ( इस यजु को बोलकर यजमान यूप के ऊपर शिर निकाले )॥ २१ ॥

उ० षट् क्लृप्तीः। आयुर्यज्ञेन कल्पताम्। मदीयमायुरनेन यज्ञेन क्लृप्तं भवतु। एवमुपरितनानि व्याख्येयानि। मुखनासिकाप्रभवो वायुः प्राणः। चक्षुः श्रोत्रं च प्रकटार्थम्। पृष्ठं रथन्तरादि। शरीरस्य वा पृष्ठम्। अयं चास्मदीयो यज्ञो वाजपेयाख्येन यज्ञेन क्लृप्तो भवतु। यूपं यजमान आरोहति। प्रजापतेः प्रजा अभूम। कृतमिदमस्माभिः कर्म अतो वयं प्रजापतेः अपत्यभूताः संजाताः। गोधूमानुपस्पृशति। स्वर्देवाः। हे देवाः, स्वः स्वर्लोकमगन्म गताः। शिरसा यूपमत्युज्जिहीते। अमृता अभूम अमरणाः संजाताः॥ २१॥

म० 'षट् चोत्तराः षट् आयुर्यज्ञेनेत्याद्याश्चशब्दाज्जुहोति वाचयति वा' ( का० १४।५।२ ) प्राजापत्यानि पञ्चयजूंषि। मदीयमायुर्यज्ञेन वाजपेयाख्येन कल्पतां क्लृप्तं भवतु। मुखनासिकाप्रभवः पञ्चवृत्तिकः प्राणवायुरप्यनेन यज्ञेन क्लृप्तो भवतु। चक्षुरिन्द्रियं यज्ञेन क्लृप्तं भवतु। श्रोत्रेन्द्रियं यज्ञेन क्लृप्तमस्तु। पृष्ठं रथन्तरादिकं शरीरस्य पृष्ठं वा यज्ञेन कल्पताम्। यज्ञेन मदीयेन वाजपेयाख्येन यज्ञो यज्ञाधिष्ठाता विष्णुः कल्पताम् । 'प्रजापतेरित्यारोहत इति' ( का० १४।५।६ ) पत्नीयजमानौ निश्रेण्या यूपमारोहतः। यजमानदेवत्यानि त्रीणि यजूंषि । वयं प्रजापतेः संबन्धिन्यः प्रजा अभूम अपत्यानि जातानि। 'स्वरिति गोधूममालभत इति' ( १४।५।७ )। स्वरिति गोधूमपिष्टनिर्मितं चषालं यजमानः स्पृशेत्। हे देवाः, वयं स्वः स्वर्गमगन्म प्राप्ताः। 'शिरसा यूपमुज्जिहीतेऽमृता इति' ( १४।५।८ )। यूपादूर्ध्वं शिरः करोति। वयममृता मरणधर्मरहिता अभूम संभूताः ॥ २१ ॥

अ॒स्मे वो॑ अस्त्विन्द्रि॒यम॒स्मे नृ॒म्णमु॒त क्रतु॑र॒स्मे वर्चा॑ᳫ्ँसि सन्तु वः। नमो॑ मा॒त्रे पृ॑थि॒व्यै नमो॑ मा॒त्रे पृ॑थि॒व्या इ॒यं ते॒ राड्य॒न्तासि॒ यम॑नो ध्रु॒वोऽसि ध॒रुण॑ः। कृ॒ष्यै त्वा॒ क्षेमा॑य त्वा र॒य्यै त्वा॒ पोषा॑य त्वा ॥ २२ ॥

[ अ॒स्मेऽइत्य॒स्मे । वः॒ । अ॒स्तु॒ । इ॒न्द्रि॒यम् । अ॒स्मेऽइत्य॒स्मे । नृ॒म्णम् । उ॒त । क्रतु॑ः । अ॒स्मेऽइत्य॒स्मे । वर्चा॑ᳫ्ँसि । स॒न्तु॒ । वः॒ । नम॑ः । मा॒त्रे । पृ॒थि॒व्यै । नम॑ः । मा॒त्रे । पृ॒थि॒व्यै । इ॒यम् । ते॒ । राट् । य॒न्ता । अ॒सि॒ । यम॑नः । ध्रु॒वः । ध॒रुण॑ः । कृ॒ष्यै । त्वा॒ । क्षेमा॑य । र॒य्यै । पोषा॑य ॥ २२ ॥ ]

( यूप पर चढ़ा हुआ ही यजमान दिशाओं को अवलोकन करे )। हे दिशाओं ! तुम्हारा ( = तुम में विद्यमान ) बलवीर्य हममें होवे। तुम्हारा धन, संकल्प, विविध तेज भी हममें होवे। ( यूप पर से ही यजमान भूमि को देखे )। माता पृथ्वी को नमस्कार है। माता पृथ्वी को नमस्कार है। ( चमड़े से गूलर की आसन्दी = कुर्सी को बिछावे )। हे आसन्दि! यह तुम्हारा राज्य है। ( उस आसन्दी पर यजमान को बिठावे )। हे यजमान ! तुम सबके नियामक हो। तुम स्वयं ही संयमनकर्त्ता हो। तुम ध्रुव और धारक हो। मैं तुम्हें खेती के निमित्त इस आसन्दी पर बिठाता हूँ। लब्ध परिपालन के लिए, धन के लिए और पुत्र-पशु की पुष्टि के लिए तुम्हें मैं कुर्सी पर बिठाता हूँ। ॥ २२ ॥

उ० दिशोऽनुवीक्षते। अस्मे वो अस्त्विन्द्रियम्। अस्मे अस्मासु वः युष्मत्संबन्धि अस्तु भवतु इन्द्रियं वीर्यम्। अस्मे नृम्णम् अस्मासु च धनं युष्मत्संबन्धि भवत्वित्यनुषङ्गः। उत क्रतुः अपिच क्रतुः कर्म युष्मत्संबन्धि भवत्वित्यनुषङ्गः। अस्मे वर्चांसि सन्तु वः अस्मासु च तेजांसि भवन्तु युष्म-

स्संबन्धीनि। पृथिवीमवेक्षते यजमानः नमो मात्रे पृथिव्यै। पृथिवीं मातरं ब्रवीमीति नमस्करोति च। अभ्यासे भूयांसमर्थं मन्यन्त इति द्विर्वचनम्। औदुम्बरीमासन्दीं बस्तचर्मणा स्तृणाति। इयं ते राट्। इयमिति लिङ्गव्यत्ययः। इदं ते तव राट् राज्यम्। अभिषिक्तोसि त्वमित्येतत्कथयति। सुन्वन्तमस्यामुपवेशयति। यन्तासि नियन्ता त्वमसि। तवानवच्छिन्नं यमनं कालान्तरेऽपि। ध्रुवोऽसि स्थिरोसि। धरुणः धारकोऽसि कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा। कर्षणाय त्वाम् क्षेमाय च धनाय च पुष्ट्यर्थं चोपवेशयामीति शेषः॥२२॥

**म०** 'अस्मे व इति दिशो वीक्षत इति' (१४।५।९) यूपारूढ एव यजमानो दिशः पश्यति। दिग्देवत्यम्। हे दिशः, वो युष्मत्संबन्धि इन्द्रियं वीर्यमस्मे अस्मास्वस्तु। नृम्णं धनं युष्मत्संबन्धि अस्मे अस्मास्वस्तु। उत अपि च क्रतुः कर्म युष्मत्संबन्धि अस्मास्वस्तु। वो युष्माकं वर्चांसि तेजांसि अस्मे अस्मासु सन्तु भवन्तु। अस्माकं संबन्धि युष्मत्सामर्थ्यमस्त्विति भावः। 'नमो मात्र इति भूमिमवेक्षत इति' (१४।५।१२)। यूपारूढ एव यजमानो भूमिं पश्यति। पृथिवीदेवत्यम्। मात्रे मातृरूपायै पृथिव्यै नमो नमस्कारोऽस्तु। 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १०।४२ ) इति द्विरुक्तिः। 'उत्तरवेदिमपरेणौदुम्बरीमासन्दीं बस्तचर्मणा स्तृणातीयं त इति' ( का० १४।५।१३ ) आसन्दीदेवत्यम्। हे आसन्दि, ते तव इयं राट् इदं राज्यं राजनं राट्। संपदादित्वाद्भावे स्त्रियां क्विप्। अभिषिक्तासि त्वमिति भावः। 'सुन्वन्तमस्यामुपवेशयति यन्तासीति' ( का० १४।५।१४ )। आसन्द्यां यजमानमुपवेशयेत्। यजमानदेवत्यम्। हे यजमान, त्वं यन्ता सर्वस्य नियन्तासि। यमनः स्वयं संयमनकर्ता भवसि। अनवच्छिन्नं तव यमनमिति भावः। तथा ध्रुवः स्थिरोऽसि धरुणो धारकोऽसि। कृष्यै कर्षणाय कृषिसिद्ध्यर्थं त्वा त्वामुपवेशयामीति सर्वत्र शेषः। क्षेमाय लब्धपरिपालनाय त्वामुप०। रय्यै धनाय त्वामुप०। पोषाय पशुपुत्रादिपुष्ट्यै त्वामुप०॥२२॥

वाजस्येमं प्रसवः सुषुवेऽग्रे सोमꣳराजानमोषधीष्वप्सु। ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳराष्ट्रे जागृयाम पुरोहिताः स्वाहा॥ २३॥

[ वाजस्य। इमम्। प्रसवऽइतिप्रसवः। सुषुवे। सुसुवऽइतिं सुसुवे। अग्रे। सोमम्। राजानम्। ओषधीषु। अप्स्वित्यप्सु। ताः। अस्मभ्यम्। मधुमतीरितिमधुमतीः। भवन्तु। वयम्। राष्ट्रे। जागृयाम। पुरोहिताऽइति पुरःहिताः। स्वाहा॥ २३॥ ]

( गूलर के बर्तन में संकलित दूध-यवादि धान्य से स्रुवा के के द्वारा आहव-नीयाग्नि में होम करे। इन सात यजुओं से सात आहुतियाँ देवे )। अन्न के उत्पादक प्रजापति ने सृष्टि के आदिकाल में इस राजा सोम को ओषधियों और जलों में उत्पन्न किया था। वे जल-ओषधियाँ हमारे लिए मधुरता युक्त होवें। हम पुरोहिता राष्ट्र में सदा जागृत ( = सचेत ) रहें यह आहुति है॥ २३॥

**उ०** वाजप्रसवीयानि जुहोति। वाजस्येमम्। तिस्रस्त्रिष्टुभो वाजप्रसवीयदेवत्याः। अत्र प्रायशो व्यवहितानां पदानां संबन्धः। वाजस्येमं प्रसवः सुषुवे। वाजस्यान्नस्य संबन्धी प्रसवः अभ्यनुज्ञानम्, इमं सोमं राजानम् अग्रे प्रथमं सुषुवे। 'षूञ् प्राणिगर्भविमोचने' इत्यस्यैतद्रूपम्। जनितवानित्यर्थः। कुतः सुषुवे। ओषधीष्वप्सु ओषधीषु वर्तमानमप्सु च वर्तमानम्। या इत्थंभूताः सोमस्य जनयित्र्य ओषधय आपश्च। ता अस्मभ्यम् अस्मदर्थम् मधुमती रसवतीः रसवत्यः भवन्तु भोग्या वा भवन्तु। वयं च ताभिरद्भिरभिषिक्ताः सन्तः स्वकीये राष्ट्रे जागृयाम अप्रमत्ताः स्याम। पुरोहिताः अग्रतो व्यवस्थिताः प्रधाना इत्यर्थः॥ २३॥

**म०** 'स्रुवेण संभृताज्जुहोति वाजस्येममिति प्रतिमन्त्रमिति' ( का० १४।५।२१ )। औदुम्बरपात्रे एकीकृताद्दुग्धव्रीह्यादिधान्यात्स्रुवेणाहवनीये सप्त मन्त्रैर्जुहोति। तिस्रस्त्रिष्टुभः प्रजापतिदेवत्याः। प्रसूतेऽसौ प्रसवः पचादित्वादच्। वाजस्यान्नस्य प्रसव उत्पादकः प्रजापतिः अग्रे सृष्ट्यादौ ओषधीषु अप्सु च वर्तमानमिमं सोमं वल्लीरूपं राजानं दीप्तिमन्तं पदार्थं सुषुवे उत्पादयामास। ता इत्थंभूताः सोमस्य जनयित्र्य ओषधय आपश्चास्मभ्यमस्मदर्थं मधुमतीर्मधुमत्यो रसवत्यो माधुर्योपेता भवन्तु भोगयोग्या भवन्तु। वयं च ताभिरभिषिक्ता राष्ट्रे स्वकीये देशे जागृयाम अप्रमत्ता भवाम। पुरोहिताः यागानुष्ठानादौ पुरोगामिनः प्रधाना इत्यर्थः। स्वाहा सुहुतमस्तु॥ २३॥

वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट्। अदित्सन्तं दापयति प्रजानन्स नो रयिꣳसर्ववीरं नियच्छतु स्वाहा॥ २४॥

[ वाजस्य। इमाम्। प्रसवऽइतिप्रसवः। शिश्रिये। दिवम्। इमा। च। विश्वा। भुवनानि। सम्राडितिसम्। राट्। अदित्सन्तम्। दापयति। प्रजानन्निति प्रजानन्। सः। नः। रयिम्। सर्ववीरमितिसर्ववीरम्। नि। यच्छतु। स्वाहा॥ २४॥ ]

अन्न के उत्पादक परमात्मा ने इस पृथ्वी, इस द्युलोक और इन समस्त भूतों को आश्रित किया ( = सबको अधीन बनाया या सबमें व्याप्त हुआ ) वह परमेश्वर जानते हुए मुझे हविः न देने वाले से भी देवों को हविः प्रदान करवाता है। वह परमात्मा हमें सब वीरों से युक्त धन देवे। यह उसके लिए आहुति है॥ २४॥

**उ०** वाजस्येमां प्रसवः। यस्य वाजस्यान्नस्य संबन्धी प्रसवोऽभ्यनुज्ञानम्। शिश्रिये आश्रयति। इमां पृथिवीं दिवं द्युलोकं च विश्वा भुवनानि सम्राट् इमानि च सर्वाणि भूतजातानि शिश्रिये आश्रयति। सम्राट्लक्षणः। यश्च अदित्सन्तं दापयति अदातुमिच्छन्तं दापयति। प्रजानन् स्वमधिकारम्। स नो रयिं स मे वीरं नियच्छतु सोऽस्मभ्यं धनं सर्वैः वीरैः संयुक्तं नियच्छतु निगृह्णातु ददात्वित्यर्थः॥ २४॥

**म०** वाजस्यान्नस्य प्रसव उत्पादक ईश्वर इमां पृथिवीं दिवं द्युलोकं च इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि च शिश्रिये आश्रितवान्। स च सम्राट् सर्वेषां भुवनानां राजा भूत्वा अदित्सन्तं हविर्दातुमनिच्छन्तं मां प्रजानन् अवगच्छन् मदीयबुद्धिप्रेरणेन हविर्दापयति। ततो नोऽस्मभ्यं सर्ववीरं सर्वैः पुत्रभृत्यादिभिर्युक्तं रयिं धनं नियच्छतु नियमनेन ददातु 'दाण् दाने' 'पाघ्राध्मा–' ( पा० ७।३।७८ ) इत्यादिना यच्छादेशः। स्वाहा सुहुतमस्तु ॥ २४ ॥

वाजस्य नु प्रसव आबभूवेमा च विश्वा भुवनानि सर्वतः। सनेमि राजा परियाति विद्वान्प्रजां पुष्टिं वर्धयमानो अस्मे स्वाहा ॥ २५ ॥

[ वाजस्य। नु। प्रसवऽइतिप्रसवः। आ। बभूव। इमा। च। विश्वा। भुवनानि। सर्व्वतः। सनेमि। राजा। परि। याति। विद्वान्। प्रजामितिप्रजाम्। पुष्टिम्। वर्द्धयमानः। अस्मेऽइत्यस्मे। स्वाहा ॥ २५ ॥ ]

अन्न के उत्पादक उस प्रजापति ने इन सब भूतमात्र को उत्पन्न किया। वह चिरन्तन राजा अपने अधिकार को जानता हुआ स्वेच्छा से सर्वत्र गमन करता है। वह हममें सन्तान और धनादि की पुष्टि ( = समृद्धि ) को करते हुए सर्वत्र व्याप्त होता है। उसके लिए यह आहुति है ॥ २५ ॥

**उ०** वाजस्य नु प्रसव आबभूव। योऽसौ वाजस्यान्नस्य प्रसवः अभ्यनुज्ञानं विसर्गो वा। नु इति विस्मयार्थः। आबभूव ब्रह्माण्डरूपेण संबभूव जात्येन। इमा च विश्वा भुवनानि सर्वतः इमानि च विश्वानि भूतानि हिरण्यगर्भप्रभृतीनि स्तम्बपर्यन्तानि। आबभूवेत्यनुवर्तते। सर्वतः सर्वतोऽवस्थितानि। सनेमि राजा परियाति विद्वान्। सनेमीति पुराणवचनः। सोऽयमन्नस्य प्रसवश्चिरंतनो राजा परियाति सर्वतो याति स्वेच्छाचारी सन्। विद्वान् स्वमधिकारं जानानः प्रजां च पुष्टिं च वर्धयमानः अस्मे अस्माकम् ॥ २५ ॥

**म०** नु इति विस्मये। वाजस्य प्रसवः प्रजापतिः इमा इमानि विश्वा विश्वानि सर्वाणि भुवनानि भूतानि सर्वतोऽवस्थितानि हिरण्यगर्भादिस्तम्बपर्यन्तानि आबभूव संभावितवान्। उत्पदितवानित्यर्थः। सनेमीति पुराणनाम। सनेमि चिरंतनो राजा दीप्तः सन् परियाति सर्वतः स्वेच्छया गच्छति। किंभूतः। विद्वान्स्वाधिकारं जानन्। तथा अस्मे अस्मासु प्रजां पुत्रादिसन्ततिं पुष्टिं धनपोषं च वर्धयमानः वर्धयन्स्वाहा सुहुतमस्तु ॥ २५ ॥

सोमꣳराजानमवसेऽग्निमन्वारभामहे। आदित्यान्विष्णुꣳसूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा ॥२६॥

[ सोमम्। राजानम्। अवसे। अग्निम्। अन्वारभामहऽइत्यनुआरभामहे। आदित्यान्। विष्णुम्। सूर्य्यम्। ब्रह्माणम्। च। बृहस्पतिम्। स्वाहा ॥ २६ ॥ ]

रक्षा के लिए राजा सोम, अग्नि, द्वादश आदित्य, सूर्य, ब्रह्मा और बृहस्पतिदेव को हम आह्वान करते हैं। यह आहुति है ॥२६॥

**उ०** सोमं राजानम्। अनुष्टुप् लिङ्गोक्तदेवत्या। सोमं राजानम् अवसे तर्पणाय अग्निं च अन्वारभामहे। अन्वारम्भश्च तर्पणार्थं एव। आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् अन्वारभामहे। तर्पणायेति सर्वेषां शेषः ॥ २६ ॥

**म०** तिस्रोऽनुष्टुभस्तापसदृष्टाः प्रथमा सोमाग्न्यादित्यविष्णुसूर्यब्रह्मबृहस्पतिदेवत्या। अवसे रक्षणार्थं तर्पणाय वा सोमं राजानमग्निं वैश्वानरमादित्यान्द्वादश विष्णुं सूर्यं ब्रह्माणं बृहस्पतिं चान्वारभामहे अन्वारम्भणमाह्वानं कुर्महे। स्वाहा सुहुतमस्तु ॥ २६ ॥

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। वाचं विष्णुꣳसरस्वतीꣳसवितारं च वाजिनꣳस्वाहा॥२७॥

[ अर्य्यमणम्। बृहस्पतिम्। इन्द्रम्। दानाय। चोदय। वाचम्। विष्णुम्। सरस्वतीम्। सवितारम्। च। वाजिनम्। स्वाहा ॥ २७ ॥ ]

अर्यमा, बृहस्पति और इन्द्र, हे ईश्वर ! तुम दान के लिए प्रेरित करो। वाणी की अधिदेवता सरस्वती के, विष्णु ( = सूर्य ) को, सविता के तथा अन्नवान् प्रजापति के दान के लिए प्रेरित करो। यह आहुति है ॥ २७ ॥

**उ०** अर्यमणं बृहस्पतिम्। अनुष्टुप् लिङ्गोक्तदेवत्या। अर्यमणं बृहस्पतिम् इन्द्रं दानाय दानार्थं चोदय प्रेरय। आहुतिरुच्यते। वाचं विष्णुं सरस्वतीं सवितारं च वाजिनं च। वाजिनो देवाश्वाः ॥ २७ ॥

**म०** अर्यमबृहस्पतीन्द्रवाग्विष्णुसरस्वतीसवितृदेवत्या। हे ईश्वर, त्वमर्यमादीन्देवान्दानाय धनप्रदानार्थं चोदय प्रेरय। बृहस्पतिमिन्द्रं देवेशं वाचं वागधिष्ठात्रीं सरस्वतीं विष्णुं सवितारं सर्वस्य प्रसवकर्तारं सूर्यम्। वाजिनमन्नवन्तमिति सर्वेषां विशेषणम्। वाजिनं देवाश्वं वा। स्वाहा सुहुतमस्तु ॥ २७ ॥

अग्ने अच्छा वदेह नः प्रति नः सुमना भव। प्र नो यच्छ सहस्रजित्त्वꣳहि धनदा असि स्वाहा॥

[ अग्ने। अच्छ। वद। इह। नः। प्रति। नः। सुमनाऽइतिसुमनाः। भव। प्र। नः। यच्छ। सहस्रजिदितिसहस्रजित्। त्वम्। हि। धनदाऽइतिधनदाः। असि। स्वाहा ॥ २८ ॥ ]

हे अग्ने ! इस हमारे यज्ञ में तुम हमारा हित कथन करो और हमारे प्रति शुभ से कल्प वाले होओ। हे सहस्र धनादि के जेता अग्ने ! तुम हमें धनादि प्रदान करो। तुम्हीं धन देने वाले हो। यह आहुति है ॥ २८ ॥

उ० अग्ने अच्छ। अनुष्टुप् आग्नेयी। 'अच्छाभेराप्तुमिति शाकपूणिः'। हे अग्ने, अभिवद इहावस्थितान् आसन्द्यां नः अस्मान् प्रति। नः सुमना भव। प्रति न इत्यनयोः पदयोः व्यत्ययः कर्तव्य इति। अस्मान्प्रति सुमनाः शोभनमनस्कः भव। प्र नो यच्छ सहस्रजित्। प्रयच्छ देहि नः अस्मभ्यं हे सहस्रजित् बहुनो वसुनो जेतः, त्वं हि धनदा असि। हिशब्दो यस्मादर्थे। यस्मात्त्वमेव धनस्य दातासि नान्यः कश्चिद्देवताविशेषः ॥ २८ ॥

म० अग्निदेवत्या। हे अग्ने, इहास्मिन्कर्मणि नोऽस्माकमच्छ वद आभिमुख्येन ब्रूहि हितमिति शेषः। 'निपातस्य च' (पा० ६।३।१३६) इति संहितायां दीर्घोऽच्छाशब्दस्य। किंच नोऽस्मान्प्रति सुमनाः करुणार्द्रचित्तो भव। हे सहस्रजित् सहस्रस्य बहुनो वसुनो जेतः, सहस्राणां योधानां वा जेतः, हि यस्मात्त्वं स्वभावतो धनदा धनस्य दातासि अतस्त्वं नोऽस्मभ्यं प्रयच्छ धनं देहि स्वाहा ॥ २८ ॥

प्र नो॑ यच्छत्वर्य॒मा प्र पू॒षा प्र बृह॒स्पति॑ः। प्र वाग्दे॒वी द॑दातु॒ नः स्वाहा॑ ॥ २९ ॥

[ प्र। न॒ः। य॒च्छ॒तु॒। अ॒र्य्य॒मा। पू॒षा। बृ॒ह॒स्पति॒रिति॒ बृह॒स्पति॑ः। वाक्। दे॒वी। द॒दा॒तु॒। न॒ः। स्वाहा॑ ॥ २९ ॥ ]

हमें अर्यमा, पूषा, और बृहस्पति अभीष्ट धनादि दान करें। वाणी की अधिदेवता सरस्वती हमें धन प्रदान करें। यह आहुति है ॥ २९

उ० प्र नो यच्छतु। गायत्री लिङ्गोक्तदेवत्या। प्रयच्छतु नोऽस्मभ्यं अर्यमा। प्रयच्छतु च बृहस्पतिः। प्रकर्षेण च वाग्देवी दानादिगुणयुक्ता। ददातु नः अस्मभ्यम् ॥ २९ ॥

म० गायत्री अर्यमपूषबृहस्पतिवाग्देवत्या। अर्यमा सूर्यविशेषो नोऽस्मभ्यं प्रयच्छतु अभीष्टं ददातु। पूषा प्रयच्छतु। उपसर्गावृत्त्या क्रियापदावृत्तिः। बृहस्पतिः प्रयच्छतु। देवी दीप्यमाना वाक् नोऽस्मभ्यं ददातु स्वाहा ॥ २९ ॥

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म् पू॒ष्णो हस्ता॑भ्याम्। सर॑स्वत्यै वा॒चो य॒न्तुर्य॒न्त्रिये॑ दधामि॒ बृह॒स्पते॑ष्ट्वा साम्रा॑ज्येना॒भिषि॑ञ्चाम्यसौ ॥ ३० ॥

[ सर॑स्वत्यै। वा॒चः। य॒न्तुः। य॒न्त्रिये॑। द॒धा॒मि॒। बृ॒ह॒स्पते॑ः। त्वा॒। साम्रा॑ज्ये॒नेति॒ साम्ऽरा॑ज्येन। अ॒भि। सि॒ञ्चा॒मि॒। अ॒सौ ॥ ३० ॥ ]

( हुतशेष से यजमान को सींचे )। हे यजमान! सवितादेव की अनुज्ञा में विद्यमान मैं अश्विनौ की बाहुओं और पूषा के हाथों के द्वारा नियमन करने वाली सरस्वती से नियम्य धन में प्रतिष्ठापित करता हूँ। अब तुम अमुक नाम को मैं बृहस्पतिदेव के साम्राज्य से अभिसिञ्चित करता हूँ १ = राज्यासन पर बिठाता हूँ ॥ ३० ॥

उ० अथैनं परिशिष्टेनाभिषिञ्चति। देवस्य त्वेति व्याख्यातम्। सरस्वत्यै यन्तुः सरस्वत्या वाचः नियमनकर्त्र्याः यन्त्रिये नियमने ऐश्वर्ये दधामि स्थापयामि। बृहस्पतेष्ट्वा बृहस्पतेश्च त्वा साम्राज्येन सम्राड्भावेन अभिषिञ्चामि। असाविति नामग्रहणम् ॥ ३० ॥

म० 'शेषेणाभिषिञ्चति यजमानं देवस्य त्वेति'। ( का० १४।५।२२ ) होमद्रव्यशेषे यजमानं शिरसि सिञ्चेत्। यजमानदेवत्यम्। सवितुर्देवस्य प्रसवे वर्तमानोऽहमश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वा त्वां वाचो वाण्या यन्तुर्यन्त्र्याः। पुंस्त्वमार्षम्। नियमनकर्त्र्याः। सरस्वत्यै षष्ठ्यर्थे चतुर्थी। सरस्वत्याः यन्त्रिये नियमने ऐश्वर्ये दधामि स्थापयामि। किंच बृहस्पतेः साम्राज्येन सम्राड्भावेन त्वा त्वामभिषिञ्चामि। असाविति तन्नामग्रहणम् ॥ ३० ॥

अ॒ग्निरेका॑क्षरेण प्रा॒णमुद॑जय॒त्तमु॒ज्जे॑षम॒श्विनौ॒ द्व्य॑क्षरेण द्वि॒पदो॑ मनु॒ष्या॒नुद॑जयता॒न्तानु॒ज्जे॑षं विष्णु॒स्त्र्य॑क्षरेण॒ त्रीँल्लो॒कानुद॑जय॒त्तानु॒ज्जे॑षꣳ सोम॒श्चतु॑रक्षरेण॒ चतु॑ष्पदः प॒शूनुद॑जय॒त्तानु॒ज्जे॑षम् ॥ ३१ ॥

[ अ॒ग्निः। एका॑क्षरे॒णेत्येक॑ऽअक्षरेण। प्रा॒णम्। उत्। अ॒ज॒य॒त्। तम्। उत्। जे॒ष॒म्। अ॒श्विनौ॑। द्व्य॑क्षरे॒णेति॒ द्वि॑ऽअक्षरेण। द्वि॒पद॒ इति॑ द्वि॒ऽपद॑ः। म॒नु॒ष्या᳖न्। उत्। अ॒ज॒य॒ता॒म्। तान्। विष्णु॑ः। त्र्य॑क्षरे॒णेति॒ त्रि॑ऽअक्षरेण। त्रीन्। लो॒कान्। सोम॑ः। चतु॑रक्षरे॒णेति॒ चतु॑ःऽअक्षरेण। चतु॑ष्पदः। चतु॑ष्पद॒ इति॒ चतु॑ःऽपदः। प॒शून् ॥ ३१ ॥ ]

( अब इन यजुषों की संज्ञा 'उज्जिति' है। इनसे घृताहुति दी जाती है। अथवा यजमान से पाठ करवाया जाता है। ओश्रावय = ४, अस्तु श्रौषड = ४, यज=२, ये यजामहे=५, वषट्-कारः ) =२। कुल योग=४+४+२+५+२=१७ अक्षर का मन्त्र यह सत्तरह अक्षर का सप्तदशाक्षर प्रजापति समास और व्यास के साथ यज्ञ के अध्यात्म को विजय करता है )। अग्नि ने एकाक्षर छन्द के द्वारा पंचधा प्राण को विजय किया। मैं ( यजमान ) भी उस अपने पंचधा प्राण को विजय करूँ। अश्विनौ ने दो अक्षर वाले छन्द के द्वारा दो पैरों वाले मनुष्यों को विजय किया। मैं भी उन मनुष्यों को विजय करूँ। विष्णु ने तीन अक्षर वाले छन्द के द्वारा तीनों लोकों को जीत लिया। मैं भी उन तीनों लोकों को विजय करूँ। सोम ने चार अक्षरों वाले छन्द के द्वारा चार पैरों वाले पशुओं को विजय किया। मैं भी उन चतुष्पद पशुओं को विजय करूँ ॥ ३१ ॥

उ० अथोज्जितीर्वाचयति। अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषम्। ओश्रावयेति चतुरक्षरम्, अस्तुश्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, येयजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः। स एष सप्तदशप्रजापतिरधियज्ञं समासव्यासाभ्यामुज्जीयते। अग्निः एकाक्षरेण छन्दसा प्राणमुदजयत् तमहमप्येकाक्षरेण छन्दसा उज्जेषम्। एवं सप्तदशोज्जितीर्व्याख्येयाः ॥ ३१ ॥

**म०** 'अग्निरेकाक्षरेणेत्यनुवाकं द्वादशवत् कृत्वेति'। (का० १४।५।२६) चतुःकण्डिकात्मकमनुवाकं द्वादशवत् द्वादश स्रुवाहुतीर्जुहोत्याप्ये स्वाहेति प्रतिमन्त्रं वाचयति वेति यत्पूर्वमुक्तं तद्वत्कृत्वेत्यर्थः। तेनैतैर्मन्त्रैर्जुहोति सप्तदश मन्त्रान् वाचयति वेत्यर्थः। एते मन्त्रा उज्जितिसंज्ञाः। सप्तदश यजूंषि लिङ्गोक्तदेवतानि। ओश्रावयेति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरं यजेति व्यक्षरं येयजामह इति पञ्चाक्षरं व्यक्षरो वषट्कारः एष सप्तदशाक्षरात्मकः प्रजापतिरधियज्ञं समासव्यासाभ्यामुज्जीयते। अग्निरेकाक्षरेण छन्दसा प्राणं पञ्चवृत्तिकमुदजयत् उत्कृष्टं जितवान्। तथाहमपि तादृशं तं प्राणमुज्जेषमुत्कृष्टं जयेयं वशीकुर्यामित्यर्थः। अश्विनौ देवौ व्यक्षरेण अक्षरद्वयात्मकेन छन्दसा द्विपदः पादद्वयोपेतान्मनुष्यानुदजयतां जितवन्तौ तथाहमपि तेनैव अक्षरेण छन्दसा तान् तादृशान्मनुष्यानुज्जेषमधिकं जयेयम्। विष्णुस्त्र्यक्षरेणाक्षरत्रयात्मकेन छन्दसा त्रीन्भूरादीन् लोकानुदजयत् अहमपि ताँल्लोकानुज्जेषम्। सोमोऽक्षरचतुष्टयात्मकेन छन्दसा चतुःपदः पादचतुष्टयोपेतान्पशूनुदजयत् अहमपि तेन तान्पशूनुज्जेषम् ॥ ३१ ॥

पूषा पञ्चाक्षरेण पञ्च दिश उदजयत्ता उज्जेषꣳ सविता षडक्षरेण षडृतूनुदजयत्तानुज्जेषं मरुतः सप्ताक्षरेण सप्त ग्राम्यान्पशूनुदजयँस्तानुज्जेषं बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम् ॥ ३२ ॥

[ पूषा। पंचाक्षरेणेतिपञ्च अक्षरेण। पञ्च। दिशः। ताः। सविता। षडक्षरेणेतिषट् अक्षरेण। षट्। ऋतून्। मरुतः। सप्ताक्षरेणेतिसप्त अक्षरेण। सप्त। ग्राम्यान्। अजयन्। बृहस्पतिः। अष्टाक्षरेणेत्यष्ट अक्षरेण। गायत्रीम्। ताम् ॥ ३२ ॥ ]

पूषादेव ने पाँच अक्षर वाले छन्द के द्वारा चार प्रधान दिशाओं और एक अवान्तर दिशा को मिलाकर पाँचों दिशाओं का विजय किया। मैं भी उन्हें विजय करूँ। सवितादेव ने छः अक्षरों वाले छन्द के द्वारा छः ऋतुओं को विजय किया। मैं भी उन्हें विजय करूँ। मरुतों ने सान अक्षर वाले छन्द के द्वारा सात ग्राम्य पशुओं का विजय किया। मैं भी उन्हें विजय करूँ। बृहस्पति ने आठ अक्षर वाले छन्द के द्वारा गायत्री का विजय किया था। मैं भी उसे विजय करूँ ॥ ३२ ॥

**म०** पूषा देवः पञ्चाक्षरेण छन्दसा पञ्चसंख्याः पूर्वाद्याश्चतस्रोऽवान्तरदिशं चेति पञ्च दिश उदजयत् अहमपि ता दिशो जयेयम्। सविता सर्वस्य प्रेरको देवः षडक्षरेण छन्दसा षट्संख्यानृतूनुदजयत् तानृतूनहमुज्जेषम्। मरुतो देवाः सप्ताक्षरेण छन्दसा सप्तसंख्यान् ग्राम्यान् पशून् गवादीनुदजयन् अहं तान् ग्राम्यान्पशूञ्जयेयम्। बृहस्पतिरष्टाक्षरात्मकेन छन्दसा गायत्रीच्छन्दोभिमानिनीं देवतामुदजयत् तां तादृशीं गायत्रीं जयेयम् ॥ ३२ ॥

मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत्तमुज्जेषं वरुणो दशाक्षरेण विराजमुदजयत्तामुज्जेषमिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जेषं विश्वेदेवा द्वादशाक्षरेण जगतीमुदजयँस्तामुज्जेषम् ॥ ३३ ॥

[ मित्रः। नवाक्षरेणेतिनव अक्षरेण। त्रिवृतमितित्रि वृतम्। स्तोमम्। वरुणः। दशाक्षरेणेतिदश अक्षरेण। विराजमितिविराजम्। इन्द्रः। एकादशाक्षरेणेत्येकादश अक्षरेण। त्रिष्टुभम्। त्रिस्तुभमितित्रिस्तुभम्। विश्वे। देवाः द्वादशाक्षरेणेतिद्वादश अक्षरेण। जगतीम् ॥ ३३ ॥ ]

मित्र ने नव अक्षर वाले मंत्र के द्वारा त्रिवृत स्तोम का विजय किया। मैं भी उसे विजय करूँ। वरुण ने दश अक्षर वाले छन्द के द्वारा विराज का विजय किया। मैं भी उसे विजय करूँ। इन्द्र ने ग्यारह अक्षर वाले छन्द से त्रिष्टुभ् छन्द का विजय किया। मैं भी उसे विजय करूँ। विश्वेदेवों ने बारह अक्षर वाले छन्द से जगती छन्द का विजय किया। मैं भी उसे विजय करूँ ॥ ३३ ॥

**म०** मित्रो देवो नवाक्षरेण छन्दसा त्रिवृतं स्तोममुदजयत्तं तादृशं स्तोममहं जयेयम्। वरुणो देवो दशाक्षरेण छन्दसा विराजम् दशाक्षरा विराडिति श्रुतिप्रसिद्धां तदभिमानिनीं देवतामुदजयत्तां विराजमहमप्युज्जेषम्। इन्द्रो देव एकादशाक्षरेण छन्दसा त्रिष्टुप्छन्दोऽभिमानिनीं देवतामुदजयत् तां त्रिष्टुभमहमुज्जेषम्। विश्वेदेवा द्वादशाक्षरेण छन्दसा जगत्यभिमानिदेवतामुदजयन् अहमपि तां जगतीं जयेयम् ॥ ३३ ॥

वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयँस्तमुज्जेषꣳ रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयँस्तमुज्जेषमादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयँस्तमुज्जेषमदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्तमुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत्तमुज्जेषम् ॥ ३४ ॥

[ वसवः त्रयोदशाक्षरेणेतित्रयोदश अक्षरेण। त्रयोदशमितित्रयः दशम्। रुद्राः। चतुर्दशाक्षरेणेतिचतुर्दश अक्षरेण। चतुर्दशमितिचतुः दशम्। आदित्याः। पञ्चदशाक्षरेणेतिपञ्चदश अक्षरेण। पञ्चदशमितिपञ्च दशम्। अदितिः। षोडशाक्षरेणेतिषोडश अक्षरेण। षोडशम्। प्रजापतिरिति प्रजा पतिः। सप्तदशाक्षरेणेतिसप्तदश अक्षरेण। सप्तदशमितिसप्त दशम् ॥ ३४ ॥ ]

वसुओं ने तेरह अक्षरों वाले छन्द से त्रयोदशस्तोम का विजय किया। मैं भी उसे विजय करूँ। रुद्रों ने चौदह अक्षरों वाले छन्द के द्वारा चतुर्दशस्तोम का विजय किया। मैं भी उसे विजय करूँ।

आदित्यों ने पञ्चदश (= पन्द्रह ) अक्षरों वाले छन्द के द्वारा पञ्चदश स्तोम का विजय किया। मैं भी उसे विजय करूँ। अदिति ने सोलह अक्षरों वाले छन्द के द्वारा षोडश स्तोम का विजय किया। मैं भी उसे विजय करूँ। प्रजापति ने सत्तरह अक्षर वाले छन्द के द्वारा सप्तदश स्तोम का विजय किया। मैं भी उसे विजय करूँ ॥ ३४ ॥

**उ०** ॥ ३२–३३–३४ ॥ वाजपेयः समाप्तः ॥

**म०** वसवस्त्रयोदशाक्षरेण छन्दसा त्रयोदशं स्तोममुदजयन् तं स्तोमं जयेयम्। रुद्रा देवाश्चतुर्दशाक्षरेण छन्दसा चतुर्दशं स्तोममुदजयन् तं स्तोममहमपि जयेयम्। आदित्या देवाः पञ्चदशाक्षरेण छन्दसा पञ्चदशं स्तोममुदजयन् तं स्तोमं जयेयम्। अदितिर्देवमाता षोडशाक्षरेण छन्दसा षोडशं स्तोममुदजयत् तेनाहमपि तं स्तोममुज्जेषम्। प्रजापतिः सप्तदशाक्षरेण छन्दसा सप्तदशाख्यं स्तोममुदजयत् तं स्तोमं तेन छन्दसाहमपि जयेयम्। एतान्मन्त्राञ्जपेदेतैर्जुहुयाद्वा ॥ ३४ ॥

इति वाजपेयमन्त्राः समाप्ताः ॥

एष ते निर्ऋते भागस्तं जुषस्व स्वाहाग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा दवेभ्य उत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ॥३५॥

[ एषः । ते । निर्ऋतऽइतिनिः । ऋते । भागः । तम् । जुषस्व । स्वाहा । अग्निनेत्रेभ्यऽइत्यग्नि नेत्रेभ्यः । देवेभ्यः । पुरः सद्भ्यऽइतिपुरः सद्भ्यः । स्वाहा । यमनेत्रेभ्यऽइतियम नेत्रेभ्यः । दक्षिणासद्भ्यऽइतिदक्षिणासत् भ्यः । विश्वदेवनेत्रेभ्यऽइतिविश्वदेव नेत्रेभ्यः । पश्चात्सद्भ्यऽइतिपश्चात्सत् भ्यः । मित्रावरुणनेत्रेभ्यऽइतिमित्रावरुण नेत्रेभ्यः । वा । मरुन्नेत्रेभ्यऽइतिमरुत् नेत्रेभ्यः । वा । उत्तरासद्भ्यऽइत्युत्तरासत् भ्यः । सोमनेत्रेभ्यऽइतिसोम नेत्रेभ्यः । उपरिसद्भ्यऽइत्युपरिसत् भ्यः । दुवस्वद्भ्यऽइतिदुवस्वत् भ्यः ३५]

( वाजपेय यज्ञ के मंत्र समाप्त हुए। अब राजसूय यज्ञ के मंत्र प्रारम्भ होते हैं। ) ( फाल्गुन का प्रथम दशमी में अनुमति के लिए आठ प्यालों पर पकाया हुआ चावलों का रोट भेंट किया जाता है। उसके निमित्त पीसने के लिए चावल लेकर पत्थर के नीचे धरी हुई शम्या पर पीस कर गिरे हुए चावलों को स्रुवा में भर कर दक्षिणाग्नि के ऊपर दक्षिण दिशा में आहुति देवे )। हे पृथिवि ! यह पिष्ट चरु तुम्हारा भाग है। तुम इसका सेवन करो। यह आहुति है। ( पंचवतीय कर्म करने के लिए पूर्व–पश्चिमादि दिशाओं में आहवनीयाग्नि स्थापित करके उनमें प्रतिमंत्र से घी की आहुतियां देवे )। पूर्व दिशा में बैठने वाले और अग्निनेतृक देवों के लिए यह आहुति है। दक्षिण दिशा में बैठने वाले और यमनेतृक देवों के लिए यह आहुति है। पश्चिम दिशा में बैठने वाले और विश्वदेवनेतृक देवों के जिए यह आहुति है। उत्तर दिशा में बैठने वाले और मित्र-वरुण-नेतृक या मरुतनेतृक देवों के लिए यह आहुति है। ऊपर स्थित होने वाले, परिचर्या वाले और सोमनेतृक देवों के लिए यह आहुति है ॥ ३५ ॥

**उ०** अथ राजसूयं वरुणोऽपश्यत्। एष ते निर्ऋते भागः स्वयं प्रदीर्णेन जुहोति। पृथिव्यत्र निर्ऋतिशब्देनोच्यते। एष ते तव हे निर्ऋते, भागः तं च सेवस्व। पञ्चधाहवनीयं व्युह्य प्रतिदिशं जुहोति। अग्निनेत्रेभ्यो देवेभ्यः। देवार्थं प्रागध्यायात्। अग्निनेत्रेभ्यो देवेभ्यः। अग्निर्नेता येषां देवानां ते अग्निनेत्राः तेभ्यो देवेभ्य इति तादर्थ्ये चतुर्थी। पुरःसद्भ्यः पुरः सीदन्तीति पुरःसदः तेभ्यः सुहुतमस्तु। अथ दक्षिणार्धे जुहोति। यमनेत्रेभ्यो देवेभ्यः। शेषं तुल्यव्याख्यानम्। अथ पश्चार्धे जुहोति। विश्वदेवनेत्रेभ्यो देवेभ्यः। अथोत्तरार्धे जुहोति। मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो देवेभ्यः। अथ मध्ये जुहोति। सोमनेत्रेभ्यो देवेभ्यः दुवस्वद्भ्यः। दुवःशब्देन हविरभिधीयते तद्येष्वस्ति ते दुवस्वन्तः तेभ्यो दुवस्वद्भ्यः ॥ ३५ ॥

**म०** अथ राजसूयमन्त्राः। तेषां वरुण ऋषिः। 'अष्टाकपालोऽनुमत्यै शम्यायाः पश्चाद्धविष्यमन्नᳪं स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयमप्रदीर्णं इरिणे वाग्नौ जुहोत्येष ते निर्ऋत इति' ( का० १५।१।९—१० )। फाल्गुनाद्यदशम्यामनुमत्यै अष्टाकपालः पुरोडाशो भवति तदर्थं गृहीतहविषः पेषणकाले दृषदधस्तान्निहितशम्यापश्चाद्भागे पन्नं पतितं यद्धविस्तण्डुलपिष्टरूपं तत् स्रुवे निधाय दक्षिणाग्नेरुल्मुकमादाय दक्षिणस्यां दिशि गत्वा स्वयं स्फुटिते भूभागे ऊषरे वोल्मुकाग्निं संस्थाप्य तद्धविर्जुहोतीति सूत्रार्थः। पृथिवीदेवत्यम्। निर्ऋतिरत्र पृथिवी। हे निर्ऋते पृथिवि, एष पिष्टरूपस्ते तव भागः तं भागं त्वं जुषस्व सेवस्व स्वाहा सुहुतमस्तु। 'पञ्चवातीयमाहवनीयं प्रतिदिशं व्यूह्य मध्ये च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्य इति प्रतिमन्त्रमिति' ( का० १५।१।२० )। एवं वर्षमिष्टाः कृत्वा पञ्चवातीयाख्यं कर्म विधेयं तत्राहवनीयं प्रागादिदिक्षु कृत्वा मध्ये चावशिष्य स्रुवेणाज्यं पञ्चस्वग्निषु यथालिङ्गं जुहोति। अध्यायसमाप्तिपर्यन्तं देवा ऋषयः। दश यजूंषि देवदेवत्यानि। अग्निर्नेता येषां ते अग्निनेत्रास्तेभ्यः। पुरः पुरस्तात्पूर्वस्यां दिशि सीदन्तीति पुरःसदस्तेभ्यो देवेभ्यः स्वाहा सुहुतमस्तु। अथ दक्षिणे जुहोति। यमनेत्रेभ्यः यमो नेता येषां तेभ्यः। दक्षिणस्यां सीदन्तीति दक्षिणासदस्तेभ्यो देवेभ्यः स्वाहा। अथ पश्चाज्जुहोति। विश्वदेवनेत्रेभ्यः विश्वेदेवा नेतारो येषां तेभ्यः पश्चात्सीदन्तीति पश्चात्सदस्तेभ्यः स्वाहा। अथोत्तरार्धे जुहोति। मित्रावरुणनेत्रेभ्यः मित्रावरुणौ नेतारौ येषां ते मित्रावरुणनेत्राः। वा यद्वा मरुतो नेतारो येषां ते मरुन्नेत्राः। उत्तरस्यां सीदन्तीत्युत्तरासद उत्तरभागार्थास्तेभ्यो देवेभ्यः स्वाहा। अत्र मित्रावरुणनेत्रेभ्यो देवेभ्यः उत्तरासद्भ्यः मरुन्नेत्रेभ्यो देवेभ्यः उत्तरासद्भ्य इति मन्त्रयोर्विकल्पः। मध्ये जुहोति।

सोमनेत्रेभ्यः सोमो नेता येषां तेभ्यः। उपरि सीदन्ति तिष्ठन्तीत्युपरिसदस्ते। दुवस्वभ्यः परिचर्यावभ्यः। यद्वात्र दुवःशब्देन हव्यं तद्येषामस्ति ते दुवस्वन्तस्तेभ्यो देवेभ्यः स्वाहा ॥ ३५ ॥

ये दे॒वा अ॒ग्निने॑त्राः पु॒रः॒सद॒स्तेभ्यः॒ स्वाहा॒ ये दे॒वा य॒मने॑त्रा दक्षिणा॒सद॒स्तेभ्यः॒ स्वाहा॒ ये दे॒वा वि॒श्वदे॑वनेत्राः प॒श्चात्सद॒स्तेभ्य॒ स्वाहा॒ ये दे॒वा मि॒त्रावरु॑णनेत्रा वा म॒रुन्ने॑त्रा वोत्त॒रा॒सद॒स्तेभ्यः॒ स्वाहा॒ ये दे॒वाः सोम॑नेत्रा उप॒रि॒सदो॒ दुव॑स्वन्त॒स्तेभ्यः॒ स्वाहा॑ ॥ ३६ ॥

[ ये । दे॒वाः । अ॒ग्निने॑त्रा॒ऽइत्य॒ग्नि ने॑त्राः । पु॒रः॒सद॒ऽइति॑पु॒रः सदः॑ । तेभ्यः॑ । य॒मने॑त्रा॒ऽइति॑य॒म ने॑त्राः । द॒क्षि॒णा॒सद॒ऽइति॑दक्षिणा सदः॑ । वि॒श्वदे॑वनेत्रा॒ऽइति॑वि॒श्वदे॑व नेत्राः । प॒श्चात्सद॒ऽइति॑प॒श्चात् सदः॑ । मि॒त्रावरु॑णनेत्रा॒ऽइति॑मि॒त्रा॒वरु॑ण नेत्राः । म॒रुन्ने॑त्रा॒ऽइति॑म॒रुत् ने॑त्राः । उ॒त्त॒रा॒सद॒ऽइत्यु॑त्त॒रा सदः॑ । सोम॑नेत्रा॒ऽइति॒सोम॑ नेत्राः । उ॒प॒रि॒सद॒ऽइत्यु॑प॒रि॒ सदः॑ । दुव॑स्वन्तः ॥ ३६ ॥ ]

( पांच भागों में बांट कर स्थापित की हुई आहवनीयाग्नि को एकत्र करके इन पांच यजुर्षो से घृत की आहुति देवे )। जो देव पूर्व दिशा में बैठने वाले और अग्निनेतृक हैं, उनके लिए यह आहुति है। जो देव दक्षिण दिशा में बैठने वाले हैं और यमनेतृक हैं, उनके लिए यह आहुति है। जो देव पश्चिम दिशा में बैठने वाले और विश्वदेव नेतृक हैं, उनके लिए यह आहुति है। जो देव उत्तर दिशा में बैठने वाले और मित्र-वरुण या मरुत नेतृक हैं; उनके लिए यह आहुति है। जो देव ऊपर स्थित होने वाले, पूजने के योग्य और सोमनेतृक हैं; उनके लिए यह आहुति है ॥ ३६ ॥

**उ०** सार्धं समुह्य जुहोति। ये देवा अग्निनेत्राः पुरःसदः तेभ्यः स्वाहा। तुल्यव्याख्यानाः पञ्चमन्त्रा ऋजवः ॥ ३६ ॥

**म०** 'उत्तराः समस्य ये देवा इति प्रतिमन्त्रमिति' (का० १५।१।२१) पञ्चधा विभक्तमाहवनीयमेकीकृत्य ये देवा इति पञ्चमन्त्रैः प्रत्येकं जुहुयादिति शेषः। ये देवा अग्निनेत्राः पुरःसदस्तेभ्यो देवेभ्यः स्वाहा। ये देवा यमनेत्राः पूर्ववद्व्याख्या। ये देवा विश्वदेवनेत्राः पश्चात्सदः। ये देवा मित्रावरुणनेत्राः ये देवा मरुन्नेत्रा इति मन्त्रयोर्विकल्पः। ये देवाः सोमनेत्राः उपरिसदः उपरि स्थिता दुवस्वन्तो हव्यवन्तस्तेभ्यः स्वाहा ॥ ३६ ॥

अग्ने॒ सह॑स्व॒ पृत॑ना अ॒भिमा॑ती॒रपा॑स्य । दु॒ष्टर॒स्तर॒न्नरा॑ती॒र्वर्चो॑धा य॒ज्ञवा॑हसि ॥ ३७ ॥

[ अग्ने॑ । सह॑स्व । पृत॑नाः । अ॒भिमा॑ती॒रित्य॒भि मा॑तीः । अप॑ । अ॒स्य॒ । दु॒ष्टरः॑ । दु॒स्त॒र॒ऽइति॑ दु॒स्तरः॑ । तर॑न् । अरा॑तीः । वर्चो॑धा॒ऽइति॒ वर्चः॑ धाः । य॒ज्ञवा॑ह॒सीति॑य॒ज्ञ वा॑हसि ॥ ३७ ॥ ]

( अपामार्ग = चिड़चिड़ा के चावलों के होम के लिए दक्षिणाग्नि के लुकाट को लेवे )। हे अग्ने ! तुम शत्रुसेनाओं को अभिभूत न करो—उन्हें दूर भगा दो। हे दुर्निवार अग्ने ! शत्रुओं को पार करते हुए तुम यज्ञ के निर्वाहक यजमान में ब्रह्मवर्चस् या अन्न धारित करो ॥ ३७ ॥

**उ०** अपामार्गहोमः। उल्मुकमादत्ते। अग्ने सहस्व पृतनाः आग्नेय्यनुष्टुप्। हे भगवन्नग्ने, सहस्वाभिभव पृतनाः संग्रामान्। किंच अभिमातीरपास्य। सपत्नोऽभिमातिरुच्यते। सपत्नांश्च अपास्य। 'असु क्षेपणे' इत्यस्यैतद्रूपम्। अपक्षिप। कस्मात्पुनरेवं त्वमुच्यसे अत आह। दुष्टरस्तरन्नरातीः तरतेस्तृणातेर्वा दुष्टरः अशक्यप्रतिक्रियो दुर्निवारस्त्वम्। किं कुर्वन् तरन्नरातीः विनाशयन् शत्रुसेनाः। किंच वर्चोधा यज्ञवाहसि। वर्च इत्यन्ननामसु पठितम्। अन्नस्य धाता दाता वा वर्चस ओजसो वा धारयितासि। यज्ञं वहतीति यज्ञवहास्तस्मिन्यज्ञवाहसि यजमाने ॥ ३७ ॥

**म०** 'अग्ने सहस्वेत्युल्मुकादानमिति' (का० १५।२।५) अपामार्गतण्डुलहोमार्थं दक्षिणाग्नेरुल्मुकमादद्यात्। अग्निदेवत्यानुष्टुब्देवश्रवोदेववातदृष्टा। हे अग्ने, पृतनाः शत्रुसेनाः सहस्व अभिभव। तथा अभिमातीः सपत्नोऽभिमातिरुच्यते स्त्रीत्वमार्षम्। अभिमातीन् शत्रून् अपास्य अपक्षिप निवर्तय। 'असु क्षेपणे' अस्य लोटि रूपम्। किंच यज्ञं वहतीति यज्ञवाहस्तस्मिन् यज्ञवाहसि यज्ञनिर्वाहके यजमाने वर्चोऽन्नं धाः धेहि। दधातेर्लुङि रूपम् 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६।४।७५) इत्यडभावः। किंभूतस्त्वम् ! दुष्टरः दुस्तरः केनापि तर्तुमशक्यः अशक्यप्रतिक्रियो दुर्निवार इत्यर्थः। अरातीः शत्रून् तरन् तिरस्कुर्वन्विनाशयन्नित्यर्थः ॥ ३७ ॥

दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । उ॒पा॒ꣳशोर्वी॒र्ये॑ण जुहोमि ह॒तꣳरक्षः॒ स्वाहा॒ रक्ष॑सां त्वा व॒धाया॑वधिष्म॒ रक्षो॑ऽवधिष्मा॒मु॒मसौ ह॒तः ॥ ३८ ॥

[ उ॒पा॒ꣳशोरित्यु॑प अꣳशोः । वी॒र्ये॑ण । जु॒हो॒मि॒ । ह॒तम् । रक्षः॑ । स्वाहा॑ । रक्ष॑साम् । त्वा॒ । व॒धाय॑ । अव॑धिष्म । रक्षः॑ । अव॑धिष्म । अ॒मुम् । अ॒सौ । ह॒तः ॥ ३८ ॥ ]

( पूर्व या उत्तर दिशा में दक्षिणाग्नि-लुकाट को स्थापित करके उसमें अपामार्ग के चावलों को होम करे )। सवितादेव के अनुशासन में वर्तमान रहकर अश्विनी देवों की बाहुओं और पूषा के हाथों के द्वारा मैं, हे तण्डुल ! तुम्हें उपांशुग्रह के वीर्य ( = बल ) सोम के साथ होम करता हूँ। अब सारा राक्षस वर्ग मारा गया। तदर्थ यह आहुति है। ( होम की गई दिशा में स्रुवा को घुमावे )। हे स्रुक् ! मैं तुम्हें राक्षसों के वध के लिए घुमा रहा हूँ। मैं इस राक्षसवर्ग को मारता हूँ। अब यह सारा राक्षसवर्ग मारा गया ॥ ३८ ॥

उ० जुहोति देवस्य त्वा व्याख्यातम् । उपांशोर्वीर्येण जुहोमि । अतो हतं हिंसितं रक्षः । स्वाहा सुहुतं चैतद्धविर्भवतु । स्रुवं प्रास्यति । रक्षसां त्वा वधार्थम् प्रास्यामीति शेषः । प्रत्यागच्छति । अवधिष्म हतवन्तो वयं रक्षः । जातावेकवचनम् । अवधिष्म । असुमिति नामग्रहणं असाविति च । अथ कोर्थः । हतवन्तो वयं खदिरवर्माणं खदिरवर्मा वा हतोस्माभिः ॥ ३८ ॥

म० 'देवस्य त्वेति जुहीतीति' ( का० १५।२।६ ) प्रागुदग्वा गत्वा गृहीतमुल्मुकं संस्थाप्य स्रुवेणापामार्गतण्डुलाञ्जुहुयात् । देवस्य त्वा व्याख्यातम् । उपांशोः त्रीणि यजूंषि रक्षोघ्नदेवत्यानि । उपांशुर्नाम प्रथमो ग्रहस्तस्य वीर्येण सामर्थ्येनाहं जुहोमि । अतएव रक्षो राक्षसजातिर्हतं निहतम् स्वाहा सुहुतं हविरस्तु । 'रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोतीति' ( क० १५।२।७ ) यस्यां दिशि होमं कुर्यात्तां दिशं प्रति स्रुवं प्रक्षिपेत् । रक्षसां राक्षसानां वधाय नाशार्थं त्वा त्वां प्रास्यामीति शेषः । 'अवधिष्म इत्यायन्त्यनपेक्षमिति' ( का० १५।२।७ ) । अध्वर्य्वादयः पश्चादनवलोकयन्तो देवयजनं प्रत्यागच्छन्ति । रक्षो राक्षसजातिं वयमवधिष्म हतवन्तः । जातावेकवचनम् । असुमिति शत्रुनामग्रहणम् असाविति च । असुं देवदत्तं वयमवधिष्म असौ देवदत्तो हतो मारितोऽस्माभिः ॥ ३८ ॥

सविता त्वा सवानाᳬं सुवतामग्निर्गृहपतीनाᳬं सोमो वनस्पतीनाम् । बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् ॥ ३९ ॥

[ सविता । त्वा । सवानाम् । सुवताम् । अग्निः । गृहपतीनामितिगृह पतीनाम् । सोमः । वनस्पतीनाम् । बृहस्पतिः । वाचे । इन्द्रः । ज्यैष्ठ्याय । रुद्रः । पशुभ्यऽइतिं पशुभ्यः । मित्रः । सत्यः । वरुणः । धर्म्मपतीनामितिधर्म्मपतीनाम् ॥ ३९ ॥ ]

( आठ देवसू हवियां दी जाती हैं । उनमें अन्तिम 'वरुणाय धर्मपतये स्वाहा' आहुति देकर यजमान के निकट जाकर और स्रुवा को बाएँ हाथ में करके यजमान की दाहिनी बाहु को पकड़ कर इस 'सविता त्वा' मन्त्र को बोले । बोलते समय मन्त्र में यथास्थान यजमान, उसके माता-पिता और देश का नाम भी लेवे ) । हे यजमान ! सवितादेव तुम्हें अनुशासनों के आधिपत्य में प्रेरित करे ( = अधिपति बनावे ) । हे यजमान ! अग्नि तुम्हें गृहस्थों के आधिपत्य में प्रेरित करे । हे यजमान ! राजा सोम तुम्हें वनवृक्षादि के आधिपत्य में प्रेरित करे । हे यजमान ! बृहस्पति तुम्हें वाणी के आधिपत्य ( = विद्वत्ता ) में प्रेरित करे । हे यजमान ! इन्द्र तुम्हें ज्येष्ठत्व के आधिपत्य में प्रेरित करे ( = तुम्हें ज्येष्ठ बनावे ) । हे यजमान ! रुद्र तुम्हें पशुओं के आधिपत्य में प्रेरित करे । हे यजमान ! सत्य अनुशासन मित्र-वरुण तुम्हें धर्माधिकारियों के आधिपत्य में प्रेरित करें । ( यह सविता-अग्नि-सोम-बृहस्पति-इन्द्र-रुद्र-मित्र-वरुण आदि आठ देवसू हवियों के देवता, हे यजमान ! तुम्हें विविध पदार्थों के आधिपत्य में आसिञ्चित करे ॥ ३९ ॥

उ० गृहीत्वा दक्षिणं यजमानबाहुं जपति । सविता त्वां सवानाम् प्रसवानामाधिपत्ये सुवतां प्रसुवताम् अभ्यनुजानातु । स हि तेषामीष्टे अग्निर्गृहपतीनाम् आधिपत्ये सुवतामित्यनुवृत्तिः । सोमो वनस्पतीनामाधिपत्ये सुवताम् । बृहस्पतिर्वाचे वागर्थमभ्यनुजानातु । इन्द्रो ज्येष्ठ्याय ज्येष्ठभावार्थं सुवताम् । रुद्रः पशुभ्यः पश्वर्थं सुवताम् । मित्रः सत्यः सत्यायेति विभक्तिव्यत्ययः । सत्यार्थं सुवताम् । वरुणो धर्मपतीनामाधिपत्ये सुवताम् ॥ ३९ ॥

म० 'उत्तमेन चरित्वा सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा नामास्य गृह्णाति मन्त्रे यथास्थानं मातापित्रोश्च यस्याश्च जाते राजा भवतीति' ( का० १५।४।१३—१५ ) । अष्टौ देवसूहवींषि । तत्रान्तिमेन वरुणाय धर्मपतय इति वारुणेन चरुणा चरित्वा यजमानान्तिके गत्वा स्रुचौ सव्ये पाणौ कृत्वा दक्षिणं तद्बाहुमादाय सविता त्वेति कण्डिकाद्वयरूपं मन्त्रमाह । मन्त्रे यथास्थानं यजमानस्य तन्मातापित्रोर्यस्या जनपदजाते राजा भवति तस्याश्च नामानि गृह्णातीति, सूत्रार्थः । अतिजगती यजमानदेवत्या । सविता सवानां प्रसवानामाज्ञानामाधिपत्ये हे यजमान, त्वा त्वां सुवतां प्रेरयतु । सर्वेषामाज्ञावानेऽधिकारी भवेत्यर्थः । अग्निर्गृहपतीनां गृहस्थानामाधिपत्ये त्वां सुवताम् । सोमो वनस्पतीनां वृक्षाणामाधिपत्ये त्वां सुवताम् । वृक्षाः सर्वे तवोपकारका भवन्त्वित्यर्थः । बृहस्पतिर्वागर्थं त्वां सुवतां पाण्डित्याय प्रेरयतु । यद्वा षष्ठ्यर्थे चतुर्थी । वाच-आधिपत्ये सुवताम् । इन्द्रो देवो ज्यैष्ठ्याय ज्येष्ठभावाय त्वां सुवताम् । रुद्रः पशुभ्यः पश्वर्थं पश्वाधिपत्ये वा त्वां सुवताम् । मित्रो देवः सत्यः 'सुपां सुलुक्' ( पा० ७।१।३९ ) इत्यादिना चतुर्थ्याः सुआदेशः । सत्याय सत्यवाक्याय सत्यं वदितुं त्वां सुवताम् । वरुणो धर्मपतीनां धर्मेश्वराणां धर्मशीलानामाधिपत्ये त्वां सुवताम् । सवित्रादयोऽष्टौ देवसूहविषां देवतास्त्वां नानाधिपत्यानि ददत्विति वाक्यार्थः ॥ ३९ ॥

इमं देवा असपत्नᳬं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इममुमुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳬं राजा ॥ ४० ॥

इति वाजसनेयसंहितायां नवमोध्यायः ॥ ९ ॥

[ इमम् । देवाः । असपत्नम् । सुवध्वम् । महते । क्षत्राय । ज्यैष्ठ्याय । जानराज्यायेतिजानराज्याय । इन्द्रस्य । इन्द्रियाय । इमम् । अमुष्य । पुत्रम् । अमुष्यै । पुत्रम् । अस्यै । विशे । एषः ।

अमीऽइत्यमी । राजा । सोमः । अस्माकम् । ब्राह्मणानाम् । राजा ॥ ४० ॥ ]

इति वाजसनेयसंहितापदे नवमोऽध्यायः ॥ ९ ॥

हे देवसू हविर्भाग् देवो ! तुम इस ( देवदत्त आदि ) यजमान को शत्रु रहित बनाकर महद् राज कार्य में प्रेरित करो; महाज्येष्ठत्व के लिए प्रेरित करो; महत् जनराज्य ( = प्रजातन्त्र ) के लिए प्रेरित करो; इन्द्र के परमोत्कृष्ट बल के लिए प्रेरित करो । यज्ञदत्त व यज्ञश्री आदि के पुत्र इस देवदत्त नामक राजा को इस कुरु-पाञ्चाल प्रभृति देशवासियों के आधिपत्य में प्रेरित करो । हे कुरु-पाञ्चाल प्रभृति देशवासियो ! यह देवदत्त तुम्हारा राजा होवे । परन्तु, हे देशवासियो ! हम ब्राह्मणों का राजा तो यह सोम है ॥ ४० ॥

इति 'तत्त्व बोधिनी' हिन्दीव्याख्यायां नवमोऽध्यायः ॥ ९ ॥

**उ०** इमं देवा असपत्नं सुवध्वम् । इमं राजानं हे देवाः, असपत्नं सुवध्वम् । महते क्षत्राय महते ज्यैष्ठ्याय ज्येष्ठभावाय । महते च जनानां राज्याय । इन्द्रस्य च इन्द्रियाय वीर्याय । सुवध्वमिति प्रत्येकं संबन्धः । इमं अमुष्यपुत्रम् । अमुष्येति यजमानस्य पितुः षष्ठ्यन्तं नाम गृह्यते । अमुष्यै पुत्रम् । अमुष्यै इति यजमानस्य मातुर्नामग्रहः । 'स आदित्येन दिनं मिथुनं समभवत्' इत्यादि श्रुतिः । इममुष्य पुत्रमित्यादिस्तृतीयपादः सोमपरत्वेन व्याख्येयः । अस्यै विशे । जनपदनामग्राहः । एष वः अमी राजा । एष वः कौरवो राजा सोमः अस्तु । अस्माकं ब्राह्मणानां राजा ॥ ४० ॥

इति उवटकृतौ मन्त्रभाष्ये नवमोऽध्यायः ॥९॥

**म०** अत्यष्टिर्यजमानदेवत्या । हे देवाः सवित्रादयः, इममसुकसंज्ञं यजमानमसपत्नं सपत्नरहितं कृत्वा सुवध्वं प्रेरयध्वम् । किमर्थं । महते क्षत्राय महत्यै क्षत्रपदव्यै । महते ज्यैष्ठ्याय ज्येष्ठभावाय । महते जानराज्याय जनानामिदं जानं जानं च तद्राज्यं च जानराज्यं । जनानामाधिपत्यायेत्यर्थः । इन्द्रस्यात्मन इन्द्रियाय वीर्याय आत्मज्ञानसामर्थ्याय इमं यजमानं सुवध्वमित्यर्थः । किंभूतमिमम् । अमुष्य पुत्रम् । अमुष्येति षष्ठ्यन्तं यजमानपितुर्नाम ग्राह्यम् । तथा अमुष्यै षष्ठ्यर्थे चतुर्थी । अमुष्या देव्याः पुत्रम् । अमुष्या इति यजमानमातुर्नामग्रहः । अस्यै विशे अस्याः कौरव्याः विशः प्रजाया अधिपतिमिति शेषः । अस्यै इति षष्ठ्यन्तं जातिनाम ग्राह्यम् । अमी इति प्रथमान्तं देशनाम ग्राह्यम् । अमी हे कुरवः पञ्चालाः, वो युष्माकमेष खदिरवर्मा राजास्तु । अस्माकं ब्राह्मणानां तु सोमश्चन्द्रो वल्लीरूपो वा सोमो राजा प्रभुरस्तु ॥ ४० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
वाजपेयो राजसूयारम्भान्तो नवमोऽगमत् ॥ ९ ॥

## दशमोऽध्यायः

अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यारातीः ॥ १ ॥

[ओ३म् अपः । देवाः । मधुमतीरितिमधु । मतीः । अगृभ्णन् । ऊर्जस्वतीः । राजस्वऽइतिराज । स्वः । चितानाः । याभिः । मित्रावरुणौ । अभि । असिञ्चन् । याभिः । इन्द्रम् । अनयन् । अभि । अरातीः ॥१॥ ]

( इस दसवें अध्याय में राजसूय के शेष कर्म और चरक सौत्रामणि यज्ञ का वर्णन है । अभिषेक के लिए गूलर के पात्रों में सरस्वती प्रभृति नदियों का जल ग्रहण किया जाता है । गाय की उल्वा आदि अन्य अपेक्षित वस्तुएँ पूर्व से संग्रह करके रक्खी जाती हैं और यथाकाल लाकर यूप के उत्तर भाग में धरी जाती हैं ) देवों ने मधुर, ऊर्जयुक्त, राजा को उत्पन्न करने वाले और चेतनाप्रद जलों को ग्रहण किया था । देवों ने उन जलों को ग्रहण किया था कि जिन जलों के द्वारा उन्होंने मित्र-वरुण को देवों का राजा अभिसिञ्चित किया था और जिन जलों के अभिसिञ्चन के द्वारा देवता इन्द्र को शत्रुओं के परे बनाकर लाए थे ( = इन्द्र को शत्रुओं के द्वारा अजेय बना दिया था ) ॥ १ ॥

**उ०** अपो देवा मधुमतीः । वरुणस्यार्षं प्राक् चरकसौत्रामण्याः । अब्देवत्या त्रिष्टुप् । या अपो देवाः मधुमतीः मधुस्वादोदकाः । अगृभ्णन् गृहीतवन्तः । ऊर्जस्वतीः अन्नवतीः । राजस्वः राजानं याः सुवन्ति जनयन्ति ता राजस्वः । चितानाः चेतयमानाः परिदृष्टकारिण्यः । किंच याभिरद्भिर्मित्रावरुणावभ्यषिञ्चन्नभिषिक्तवन्तः । देवा इत्यनुवृत्तिः । याभिः इन्द्रम् अनयन् नीतवन्तः । अत्यरातीः अतीत्य अरातीः अदानवतीः शत्रुसेनाः । प्रकृतत्वादेताः पदमस्ति ताः गृह्णामीति शेषः ॥ १ ॥

**म०** नवमेऽध्याये वाजपेय-राजसूयसंबन्धि कियदपि कर्मोक्तं । दशमेऽभिषेकार्थजलादानादिराजसूयशेषश्चरकसौत्रामणी चोच्यते । तत्र इष्टान्तेऽपो गृह्णाति यूपमुत्तरेण नैमित्तिकीरसंभवाद्धत्वेतराः पृथक् पात्रेष्वौदुम्बरेषु ( का० १५।४।२०–२२) 'सारस्वतीर्गृह्णात्यपो देवाः' (१५।४।३३) इति । इष्टाग्रहणं कार्यशेषोपलक्षणम् । देवसूहविषां भागपरिहरणान्ते कृते अभिषेकार्था वक्ष्यमाणा अपो वक्ष्यमाणप्रकारेणौदुम्बरवृक्षपात्रेषु पृथग्गृह्णाति । तत्र विशेषः । निमित्तवशात्प्राप्या नैमित्तिक्यः यथान्तरिक्षात्प्रतिगृह्यातपवर्षाः प्रुष्वाः गोरुल्व्या इत्याद्याः ता राजसूयारम्भात् प्रागेव संपाद्य तदानीं यूपमुत्तरेण गृह्णीयात् । कुतः असंभवात् तदानीमातपवर्षणादेर्निमित्तस्याभावात् इतरा अनैमित्तिकीरपो गत्वा तदानीमेव गृह्णीयात् । तत्र मन्त्रानाह । अपो देवा इति सरस्वतीनदीसंबन्धिनीरप आदौ गृह्णाति । चरकसौत्रामण्यां वरुण दृष्टं । अब्देवत्या त्रिष्टुप् । देवा

इन्द्रादयो या अपोऽगृभ्णन् गृहीतवन्तः । किंभूता अपः । मधुमतीः मधुरस्वादोपेताः । तथा ऊर्जस्वतीः ऊर्जो विद्यते यासु । विशिष्टान्नरसवतीः । राजस्वः राज्ञः सूयन्ते जनयन्तीति राजस्वः नृपोत्पादिकाः । चितानाः चेतयमानाः सदेवतत्वात्परिदृष्टकारिणीः । पुनस्ता एव विशिनष्टि । याभिरद्भिर्देवा मित्रावरुणौ अभ्यषिञ्चन् मित्रावरुणयोरभिषेकं कृतवन्तः । याभिरद्भिर्देवा इन्द्रं देवमरातीः शत्रून् अत्यनयन् अतीत्य नीतवन्तः इन्द्रं शत्रूनत्यक्रामयन्नित्यर्थः । 'छन्दसि परेऽपि' ( पा० १।४।८१ ) इति अतेरुपसर्गस्य क्रियापदात्परत्वम् । ता अपो गृह्णामीति शेषः ॥ १ ॥

वृष्ण॑ ऊ॒र्मिर॑सि राष्ट्र॒दा रा॒ष्ट्रं मे॑ देहि॒ स्वाहा॑ वृष्ण॑ ऊ॒र्मिर॑सि राष्ट्र॒दा रा॒ष्ट्रम॒मुष्मै॑ देहि वृष॒से॒नो॒ऽसि राष्ट्र॒दा रा॒ष्ट्रं मे॑ देहि॒ स्वाहा॑ वृष॒से॒नो॒ऽसि राष्ट्र॒दा रा॒ष्ट्रम॒मुष्मै॑ देहि ॥ २ ॥

[ वृष्ण॑ । ऊ॒र्मिः । अ॒सि॒ । रा॒ष्ट्र॒दा इति॑ राष्ट्र । दाः । रा॒ष्ट्रम् । मे॒ । दे॒हि॒ । स्वाहा॑ । अ॒मुष्मै॑ । वृष॒से॒न॒ इति॒ वृष । से॒नः॒ ॥ २ ॥ ]

( इस मन्त्र में एक-एक यजु का दो बार पाठ है । स्वाहान्त पाठ से आहुति दी जाती है और द्वितीय पाठ से भिन्न-भिन्न जलों को ग्रहण करना है । किसी मनुष्य या पशु के नदी में प्रवेश करने पर जो लहरियाँ उठें—उन्हें ग्रहण करना है ) । हे लहर ! तुम सेचन समर्थ की लहरी हो । तुम राष्ट्र को देने वाली हो । हमें भी राष्ट्र प्रदान करो । यह हविः आहुत है । हे लहर ( द्वितीय ) ! तुम सेचन-समर्थ की लहरी हो । ( ग्रहण करना ) । तुम राष्ट्र को देने वाली हो । तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो । हे लहर ! तुम सेचक जलराशि हो । तुम राष्ट्र को देने वाली हो । तुम मुझे राष्ट्र प्रदान करो । यह हविः आहुत है । हे लहर ! तुम सेचक जलराशि हो । तुम राष्ट्र देने वाली हो । तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो ॥ २ ॥

**उ०** अनेन मन्त्रेण सारस्वतीर्गृहीत्वा अनन्तरं हुत्वा षोडशापो गृह्यन्ते । तत्र प्रथमो होममन्त्रः । द्वितीयो ग्रहणमन्त्रः । नदीप्रवाहेऽवस्थितस्य पशोर्वा पुरुषस्य वा यौ ऊर्मी व्यर्दतः तौ गृह्णाति । स यः प्राङुदर्दति प्राङुदुच्छति तं गृह्णाति । वृष्ण ऊर्मिरसि राष्ट्रदाः । यस्त्वं वृष्णो वर्षितुः सेक्तुः संबन्ध्य ऊर्मिरसि । वृषा हि यदि पुरुषो यदि पशुः राष्ट्रदाश्च । राष्ट्रं जनपदः तस्य स्वभावत एव दातासि तं त्वां ब्रूमो राष्ट्रं मे मह्यं देहि । स्वाहा गृह्णामि । वृष्ण ऊर्मिरसि राष्ट्रदाः राष्ट्रममुष्मै । अमुष्मा इति यजमानस्य नामग्रहः । देहि । एवमुपरितना अपि मन्त्रा व्याख्येयाः । द्वितीयमूर्मिं गृह्णाति । वृषसेनोसि । वृषा युवोच्यते । वृषप्रधाना सेना यस्य स वृषसेनः । स्यन्दमानाः ॥ २ ॥

**म०** 'जुहोत्युत्तरासु चतुर्गृहीतं वृष्ण ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति' ( का० १५।४। ३४ ) 'अवगूढात्पशोः पुरुषाद्वा पूर्वापरा ऊर्मी इति' ( १५। ४।३३ ) सारस्वतीरादायोत्तरासु षोडशस्वप्सु, वृष्ण ऊर्मिरित्यादिभिः स्वाहान्तैः पूर्वपूर्वमन्त्रैश्चतुर्गृहीताज्यानि गृह्यमाणासु जुहुयात् उत्तरैः स्वाहाहीनैर्मन्त्रैस्ताः क्रमेण गृह्णाति । उत्तरमन्त्रेषु अमुष्मै इति पदस्थाने चतुर्थ्यन्तं यजमाननाम ग्राह्यम् । वृष्ण ऊर्मिरित्यादयो विश्वभृत स्थेत्यन्ता मन्त्राः संहितायां द्विशः पठितास्तेषां पूर्वः पूर्वः स्वाहान्तस्तेनाज्यहोमः उत्तरोत्तरः स्वाहाहीनस्तेनापामादानम् । तत्र गत्वा जले प्रविष्टात्पशोर्नराद्वा यौ पूर्वापरौ कल्लोलौ तौ हुत्वा गृह्णातीति सूत्रार्थः । वृष्णा ऊर्मिरसीप्यादीनि आपः स्वराज इत्यन्तानि यजूंषि लिङ्गोक्तदेवतानि । हे कल्लोल, त्वं वृष्णो वर्षितुः सेक्तुः पशोर्नरस्य वा संबन्धी ऊर्मिः कल्लोलोऽसि । राष्ट्रदाः राष्ट्रं जनपदं ददातीति राष्ट्रदाः स्वभावत एव देशप्रदो भवसि अतो राष्ट्रं मे मह्यं देहि स्वाहा हविर्दत्तमस्तु । एवं हुत्वाथ गृह्णाति वृष्ण ऊर्मिरसि राष्ट्रदा अतोऽमुष्मै यजमानाय राष्ट्रं जनपदं देहि । अमुष्मैइति चतुर्थ्यन्तं यजमाननाम ग्राह्यम् । एवमुपरितना अपि मन्त्रा व्याख्येयाः । अपरोर्मिं गृह्णाति वृषसेनोऽसि वृषा सेचनसमर्था सेना जलाराशिरूपा यस्य स वृषसेनः । व्याख्यातमन्यत् ॥ २ ॥

अ॒र्थेत॑ स्थ राष्ट्र॒दा रा॒ष्ट्रं मे॑ द॒त्त स्वाहा॒ऽर्थेत॑ स्थ राष्ट्र॒दा रा॒ष्ट्रम॒मुष्मै॑ द॒त्तौज॑स्वती स्थ राष्ट्र॒दा रा॒ष्ट्रं मे॑ द॒त्त स्वाहौज॑स्वती स्थ राष्ट्र॒दा रा॒ष्ट्रम॒मुष्मै॑ द॒त्ताप॑ः परि॒वाहि॑णी स्थ राष्ट्र॒दा रा॒ष्ट्रं मे॑ द॒त्त स्वाहाप॑ः परि॒वाहि॑णी स्थ राष्ट्र॒दा रा॒ष्ट्रम॒मुष्मै॑ द॒त्ताप॑ां पति॑रसि राष्ट्र॒दा रा॒ष्ट्रं मे॑ देहि॒ स्वाहा॒पां पति॑रसि राष्ट्र॒दा रा॒ष्ट्रम॒मुष्मै॑ देह्य॒पां गर्भो॑ऽसि राष्ट्र॒दा रा॒ष्ट्रं मे॑ देहि॒ स्वाहा॒पां गर्भो॑ऽसि राष्ट्र॒दा रा॒ष्ट्रम॒मुष्मै॑ देहि ॥ ३ ॥

[ अ॒र्थेत॒ इत्य॑र्थ॒ऽइतः॑ । स्थ॒ । द॒त्त । ओज॑स्वतीः । आप॑ः । प॒रि॒वाहि॑णीः । प॒रि॒वाहि॒नी॒रिति॑ परि । वा॒हि॒नीः॒ । अ॒पाम् । पति॑ः । अ॒पाम् । गर्भ॑ः ॥ ३ ॥ ]

हे जलो ! तुम अभिषेक प्रयोजनार्थ यज्ञ-स्थल को प्राप्त होने वाले हो । तुम राष्ट्र को देने वाले हो । हमें तुम राष्ट्र प्रदान करो । यह आहुति है । हे जलो ! तुम अभिषेक के प्रयोजन के निमित्त यज्ञ-स्थल को प्राप्त होने वाले हो । तुम अभिषेचन के द्वारा राष्ट्र को प्रदान करने वाले हो । तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो । हे जलो ! तुम ओजस् से युक्त हो । तुम राष्ट्र को देने वाले हो । तुम मुझे राष्ट्र प्रदान करो । यह हविः आहुत है । हे जलो ! तुम ओजस् से युक्त हो । तुम राष्ट्र देने वाले हो । तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो । हे जलो ! तुम सर्वत्र गमनशील हो । तुम राष्ट्र देने वाले हो । तुम मुझे राष्ट्र प्रदान करो । हे जलो ! तुम सर्वत्रगमनशील हो । तुम राष्ट्र को देने वाले हो । तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो । हे समुद्र जल ! तुम नदी आदि के जलों के स्वामी हो । तुम राष्ट्र देने वाले हो । तुम मुझे राष्ट्र प्रदान

करो। यह हविः आहुत है। हे सामुद्रजल ! तुम नदी आदि जलों के स्वामी हो। तुम अभिषेक के द्वारा राष्ट्र देने में समर्थ हो। तुम इस देवदत्त प्रभृति को अभिषेचन के द्वारा राष्ट्र प्रदान करो। हे जलभंवर ! तुम जलों का गर्भ हो। तुम राष्ट्र देने वाले हो। तुम मुझे राष्ट्र प्रदान करो। यह हविः आहुत है। हे जलभंवर ! तुम जलों का गर्भ हो। तुम राष्ट्र देने वाले हो। तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो ॥ ३ ॥

**उ०** अर्थेता स्थ राष्ट्रदाः। अर्थं प्रयोजनं निष्पादयितुं याः यन्ति गच्छन्ति ता अर्थेतः। अस्तेर्बहुवचनं स्थ इति। राष्ट्रदाः। एतदपि बहुवचनम्। राष्ट्रं मे दत्त। दत्तेति ददातेर्बहुवचनम्। व्याख्यातमन्यत्। प्रतिलोमाः तु ओजस्वतीः ओजसा बलेन युक्ताः सत्यः एताः प्रतिलोमाः स्यन्दन्ते। अपयतीः आपः परिवाहिणीः। हे आपः, याः यूयं परिवाहिणीः सर्वतो वहनशीलाः स्थ उक्तमन्यत्। नदीपतिः अपांपतिरसि। ऋज्वर्थः। निवेष्टयम् 'वेष्ट वेष्टने' अस्य निपूर्वस्यान्त्यव्यापत्त्या निवेष्टय आवर्त उच्यते। स्यन्दमानाः स्थावराः प्रत्यागता आपः ॥३॥

**म०** 'स्यन्दमाना इति नद्यादिप्रवाहस्था अपो गृह्णाति'। (का० १५।४।२४) अर्थेतः अर्थं प्रयोजनमुद्दिश्य नद्यादेः सकाशाद् यज्ञदेशं यन्ति गच्छन्तीत्यर्थेतः इणः क्विपि तुगागमः। तथाविधा यूयं राष्ट्रदाः देशदाग्यः स्थ भवथ। मे राष्ट्रं दत्त यच्छत। दत्तेति बहुवचनम् अन्यद्व्याख्यातम् (का० १५।४।२५)। प्रतिलोमाः। वहन्तीनां याः प्रतिगच्छन्ति तासु होमादाने। हे आपः, यूयमोजस्वतीः ओजसा बलेन युक्ता भवथ। 'अपयतीरिति' ! (का० १५।४।२६) वहन्तीनामपां मध्याद्या मार्गान्तरेण गत्वा पुनस्तत्र मिलन्ति ता अपयत्यस्तासु होमादाने। हे आपः, यूयं परिवाहिणीः स्थ परिसर्वतो वहन्तीति परिवाहिण्यः सर्वतोवहनशीला भवथ उक्तमन्यत् (का० १५।४।२७) नदीपतिमिति । समुद्रस्यापां होमादाने। अपां जलानां पतिः स्वामी पालकोऽसि। (का० १५।४।२९) निवेष्या इति। निवेष्य आवर्तस्तद्भवा निवेष्याः नद्यादौ यत्राम्भोभ्रमस्तत्र होमादाने हे जलभ्रम, त्वमपां गर्भो मध्यवर्ती भवसि ॥ ३ ॥

सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त। मधुमतीर्मधुमतीभिः पृच्यन्तां महि क्षत्रं क्षत्रियाय वन्वाना अनाधृष्टाः सीदत सहौजसो महि क्षत्रं क्षत्रियाय दधतीः ॥४॥

[ सूर्यत्वचसऽइतिसूर्य । त्वचसः। सूर्यवर्चसऽइतिसूर्य । वर्चसः। मान्दाः। व्रजक्षितऽइतिव्रज । क्षितः। वाशाः। शविष्ठाः। शक्वरीः। जनभृतऽइतिजन । भृतः। विश्वभृतऽइतिविश्व । भृतः। आपः। स्वराजऽइतिस्व । राजः। महि। क्षत्रम्। क्षत्रियाय। वन्वानाः। अनाधृष्टाः। सीदत। सहौजसऽइतिसह । ओजसः। दधतीः ॥ ४ ॥ ]

हे स्थिर और सदा घामयुक्त जलो ! तुम सूर्य की कान्ति-घाम से सदा युक्त हो। तुम राष्ट्र देने वाले हो। तुम मुझे राष्ट्र प्रदान करो। यह हविः आहुत है। हे स्थिर सघर्मजलो ! तुम सूर्य-तेज वाले हो। तुम राष्ट्र देने वाले हो। तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो। (यूप में बरसते हुए जलों को संचित करके यूप के उत्तर में स्थापित उन जलों में होम करते हुए—) हे घाम में बरसे हुए जलो ! तुम सूर्य के वर्चस् वाले हो। तुम राष्ट्रदाता हो। तुम मुझे राष्ट्र प्रदान करो। यह हविः आहुत है। हे घर्मधर्षित जलो ! तुम सूर्य के तेज से युक्त हो। तुम राष्ट्र देने वाले हो। तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो। हे पोखर आदि में स्थित आनन्ददायी जलो ! तुम पशु-पक्षी आदि को आनन्द देने वाले हो। तुम राष्ट्र देने वाले हो। तुम मुझे राष्ट्र प्रदान करो। यह हविः आहुत है। हे पोखर के आनन्दप्रद जलो ! तुम पशुओं आदि को आनन्द देने वाले हो। तुम राष्ट्र देने वाले हो। तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो। हे कूप जलो ! तुम कूप में वास करने वाले और राष्ट्र दाता हो। तुम मुझे राष्ट्र प्रदान करो। यह हविः आहुत है। हे कूपजलो ! तुम कूप में स्थित होने वाले और राष्ट्र-दाता हो। तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो। हे ओस-जलो ! तुम अन्न की उत्पत्ति के निमित्त सबसे कामना किए जाने वाले हो। तुम राष्ट्र देने वाले हो। तुम मुझे राष्ट्र प्रदान करो। यह हविः आहुति है। हे अवश्याय जलो ! तुम सर्व काम्य हो। तुम राष्ट्रदा हो। तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो। (शहर में होम करते समय—) हे मधुरूप जलो ! तुम बल और राष्ट्र देने वाले हो। तुम मुझे राष्ट्र प्रदान करो। यह हविः आहुत है। हे मधुजलो ! तुम बल प्रद व राष्ट्रदा हो। तुम इस देवदत्त प्रभृति को राष्ट्र प्रदान करो। (बियाती हुई गाय की झिल्ली से संचय करके यूप के उत्तर में धरे हुए जलों में होम करते हुए—)

से वर्षा उत्पन्न हुई। हे इष्टके ! तुम वर्षारूपिणी हो। तुम उस वर्षारूपिणी ईंट को मैं चिति में धरता हूँ। वर्षा से जगती छन्द उत्पन्न हुआ। हे इष्टके ! तुम जगतीस्वरूपा हो। उस तुम जगतीस्वरूपा ईंट को मैं चिति में धरता हूँ। उस जगती से ऋक्समसाम उत्पन्न हुआ। हे इष्टके ! तुम ऋक्समसाम के स्वरूप वाली हो। उस तुम ऋक्समसाम के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। ऋक्समसाम से शुक्र ग्रह उत्पन्न हुआ। हे इष्टके ! तुम शुक्रग्रह के स्वरूप वाली हो। उस तुम शुक्रग्रह के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। प्रजापति ने शुक्रग्रह से सप्तदशस्तोम को बनाया। हे इष्टके ! तुम सप्तदशस्तोम के स्वरूप वाली हो। उस तुम सप्तदशस्तोम के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। सप्तदशस्तोम से वैरूपपृष्ठसाम उत्पन्न हुआ। हे इष्टके ! तुम वैरूपपृष्ठसाम के स्वरूप वाली हो। उस वैरूपपृष्ठसाम के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। वैरूपपृष्ठसाम से संसार को जाकर देखने और मनन करनेवाले जमदग्नि ऋषि ( =चक्षु ) उत्पन्न हुए। हे इष्टके ! तुम जमदग्नि ऋषि के स्वरूप वाली हो। उस तुम जमदग्नि ऋषि के स्वरूप वाली इष्टका को मैं चिति में धरता हूँ। प्रजापति के द्वारा बनाई तुम एक ईंट को चिति में धरकर मैं प्रजा के लिए चक्षुओं को ही ग्रहण करता हूँ ॥ ५६ ॥

**उ०** अयं पश्चात्। अयं पश्चाद्विश्वव्यचा। 'असौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेति अथेदं सर्वं व्यचा भवति तद्यत्तमाह'। पश्चादिति क्रियानिर्देशः ॥ ५६ ॥

**म०** अयं पश्चादित्यादमन्त्रैर्द्वितीयं दशकमुत्तरश्रोणेरारभ्योपदधाति। पश्चात्प्रतीचीं दिशमञ्चति गच्छतीति पश्चात् प्रतीचीगमनशीलो. विश्वं विचति उदितः सन्प्रकाशयतीति विश्वव्यचा आदित्योऽयं प्रसिद्धस्तद्रूपां सा०। 'असौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेदꣳसर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति' ( ८।१।२।१ ) इति श्रुतिः। तस्यादित्यस्य संबन्धि चक्षुरतएव वैश्वव्यंचसं विश्वव्यचसो रवेरुत्पन्नं तद्रूपां सा०। 'चक्षुस्तस्माद्रूपादादित्यान्निरमिमीत' ( ८।१।२।२ ) इति श्रुतेः। चाक्षुष्यः चक्षुष उत्पन्ना वर्षा ऋतुस्तद्रूपां सा०। गर्गादित्वाद्यञ् 'वर्षा ऋतुं चक्षुषो निरमिमीत' ( ८।१।२।२ ) इति श्रुतेः। वर्षाभ्य उत्पन्न जगतीछन्दस्तद्रूपां सा०। जगतीछन्दो वर्षाभ्य ऋतोर्निरमि०। जगतीच्छन्दस उत्पन्नमृक्समसंज्ञं यत्साम तद्रूपां सा०। जगत्यै छन्दस ऋक्समꣳसाम निरमि०। ऋक्समादुत्पन्नो यः शुक्रग्रहस्तद्रूपां सा०। ऋक्समात्साम्नः शुक्रं ग्रहं निरमि०। शुक्रादुत्पन्नो यः सप्तदशस्तोमस्तद्रूपां त्वां सा०। शुक्राद्ग्रहात्सप्तदशꣳस्तोम निरमि०। सप्तदशात्स्तोमादुत्पन्नं यद्वैरूपं पृष्ठं तद्रूपां सा०। सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमि०। जमदग्निर्ऋषिः जमति जगत्पश्यतीति जमन्। अग्नति सर्वत्र गच्छतीत्यग्निः। ऋषति जानाति ऋषिः ईदृशं यच्चक्षुस्तद्रूपां सा०। 'चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत् पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः' ( ८।१।२।३ ) इति श्रुतेः। प्रजापतिसृष्टया त्वयेष्टकया प्रजार्थं चक्षुर्गृह्णामि दशमन्त्रैश्चक्षुरेव गृह्णामि। 'सकृत्सादयत्येतच्चक्षुः करोति' ( ८।१।२।३ ) इति श्रुतेः ॥ ५६ ॥

इ॒दमु॑त्त॒रात्स्व॒स्तस्य॒ श्रोत्र॑ꣳसौ॒वꣳश॒रच्छ्रौ॒त्र्यनु॑ष्टुप् शा॒रद्य॑नु॒ष्टुभ॑ ऐ॒डमै॒डान्म॒न्थी म॒न्थिन॑ एक॒विꣳश एक॒विꣳशाद्वै॑रा॒जं वि॒श्वामि॑त्र॒ ऋषिः॑ प्र॒जाप॑तिगृहीतया॒ त्वया॒ श्रोत्रं॑ गृह्णामि प्र॒जाभ्यः॑ ॥ ५७ ॥

[इ॒दम्। उ॒त्त॒रात्। स्व॒रिति॒स्वः॑। श्रोत्र॑म्। सौ॒वम्। श॒रत्। श्रौ॒त्री। अ॒नु॒ष्टुप्। अ॒नु॒स्तु॒बित्य॑नु॒ स्तुप्। शा॒र॒दी। अ॒नु॒ष्टुभः॑। अ॒नु॒स्तु॒भ॒ इत्य॑नु॒ स्तुभः॑। ऐ॒डम्। ऐ॒डात्। म॒न्थी। म॒न्थिनः॑। ए॒क॒वि॒ꣳश इत्ये॑क वि॒ꣳशः। ए॒क॒वि॒ꣳशादित्ये॑क वि॒ꣳशात्। वै॒रा॒जम्। वि॒श्वामि॑त्र॒ इति॑। श्रोत्र॑म् ॥५७॥]

( चतुर्थ इष्टका-दशक को चिति में धरना। ) उत्तर दिशा में आद्योपान्त यह स्वर्ग विद्यमान है। हे इष्टके ! तुम उस स्वर्ग के स्वरूप वाली हो। उस तुम स्वर्ग के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। उस स्वर्ग का अपत्य यह श्रोत्र है। हे इष्टके ! तुम श्रोत्रस्वरूपा हो। उस तुम श्रोत्रस्वरूपिणी ईंट को मैं चिति में धरता हूँ। उस श्रोत्र की सन्तति यह शरद् ऋतु है। हे इष्टके ! तुम शरदृतुरूपा हो। उस तुम शरदृतुस्वरूपा ईंट को मैं चिति में धरता हूँ। शरद् ऋतु का अपत्य अनुष्टुप् छन्द है। हे इष्टके ! तुम अनुष्टुप्छन्दस्वरूपा हो। उस तुम अनुष्टुप्छन्दस्वरूपिणी ईंट को चिति में धरता हूँ। अनुष्टुप्छन्द से ऐडसंज्ञक साम उत्पन्न हुआ। हे इष्टके ! तुम ऐडसंज्ञक साम के स्वरूप वाली हो। उस तुम ऐडसंज्ञकसाम के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। उस ऐडसाम से मन्थीसंज्ञक ग्रह उत्पन्न हुआ। हे इष्टके ! तुम उस मन्थीग्रह के स्वरूप वाली हो। उस तुम मन्थीग्रह के स्वरूप वाली इष्टका को मैं चिति में धरता हूँ। मन्थीग्रह से एकविंशस्तोम उत्पन्न हुआ। हे इष्टके ! तुम एकविंशस्तोम के स्वरूप वाली हो। उस तुम एकविंशस्तोम के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। एकविंशस्तोम से वैराजसाम उत्पन्न हुआ। हे इष्टके ! तुम वैराजसाम के स्वरूप वाली हो। उस तुम वैराजसाम के स्वरूपवाली ईंट को मैं चिति में धरता हूँ। वैराजसाम से सर्वजगत् के मित्र विश्वामित्र ऋषि ( =श्रोत्र ) उत्पन्न हुए। हे इष्टके ! तुम उन विश्वामित्र ऋषि के स्वरूप वाली हो। उस तुम विश्वामित्र ऋषि के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। तुम इस प्रकार की एक प्रजापति के द्वारा बनाई गई ईंट को चिति में धरने के द्वारा मैं प्रजाओं के लिए श्रोत्र को ही ग्रहण करता हूँ ॥ ५७ ॥

उ० अथोत्तरतः । इदमुत्तरात्स्वः । 'दिशो वा उत्तरा तद्युत्तमाहोत्तरादित्युत्तरांत्तर्हस्मात्सर्वस्माद्दिशः । अथ यत्स्व-रित्याह स्वर्गो हि लोको दिशः' इति ॥ ५७ ॥

म० दशममन्त्रैश्चतुर्थं दशकमुत्तरांसादारभ्योपदधाति । उत्तरस्यामुत्तरात् 'उत्तराधरदक्षिणादातिः' । (पा० ५ । ३ । ३४) इति आतिप्रत्ययः । सर्वस्मादुत्तरभागस्था दिशः यदिदं स्वः स्वर्गो लोकः तां दिक्स्वर्गरूपां त्वां सा० । क्रियाव्ययविशेषणानां नपुंसकत्वमेकत्वं चेति वचनादिदमुत्तरादित्युक्तम् । 'दिशो वा उत्तरात्तयत्ता आहोत्तरादित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत्स्वरित्याह 'स्वर्गो हि लोको दिशः श्रोत्रᳪ᳭ह दिशो भूलोत्तरं तस्थौ तदेतद्रूपमुपदधाति' (८ । १ । २ । ४) इति श्रुतेः । तस्य स्वर्गस्य संबन्धि श्रोत्रं कीदृशम् । सौवम् स्वः इदं सौवं 'तस्येदम्' (पा० ४ । ३ । १२०) इत्यण् । द्वारादित्वादैजागमः (पा० ७ । ३ । ४) अव्ययानां भमात्रे टिलोपः । श्रोत्ररूपां त्वां सा० । 'श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीत' (८ । १ । २ । ५) इति श्रुतेः । श्रोत्रादुत्पन्ना या शरत्तद्रूपां सा० । 'शरदमृतुᳪ᳭श्रोत्रान्निरमिमीत' (८ । १ । २ । ५) इति श्रुतेः । शरद उत्पन्नं यदनुष्टुप्छन्दस्तद्रूपां सा० । अनुष्टुभं छन्दः शरद ऋतोर्निरमि० । अनुष्टुभ उत्पन्नं यदैडं साम तद्रूपां सा० । अनुष्टुभश्छन्दस ऐडᳪ᳭साम निरमि० । ऐडात्साम्न उत्पन्नो यो मन्थी ग्रहस्तद्रूपां सा० । ऐडात्साम्नो मन्थिनं ग्रहं निरमि० । मन्थिग्रहादुत्पन्नो य एकविंशस्तोमस्तद्रूपां सा० । मन्थिनो ग्रहादेकविंशᳪ᳭स्तोमं निरमि० । एकविंशस्तोमादुत्पन्नं यद्वैराजं पृष्ठं तद्रूपां सा० । एकविᳪ᳭शात्स्तोमाद्वैराजं पृष्ठं निरमि० । विश्वामित्र ऋषिः विश्वं सर्वं मित्रं येन 'मित्रे चर्षौ' (पा० ६ । ३ । १३०) इति दीर्घः । तादृश ऋषिः श्रोत्रं श्रद्धयान्यवाक्यश्रवणात्सर्वमित्रं भवति विश्वामित्रर्षिरूपं यत् श्रोत्रं तद्रूपां सा० । 'श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिः' (८ । १ । २ । ६) इति श्रुतेः । प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः श्रोत्रं गृह्णामीति दशमन्त्रैः श्रोत्रमेव सादयति 'ये नानाकामाः श्रोत्रे तांस्तद्दधाति श्रोत्रमेव सादयति 'ये नानाकामाः श्रोत्रे तांस्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोति' (८ । १ । २ । ६) इति श्रुतेः ॥ ५७ ॥

इ॒यमु॒परि॑ म॒तिस्तस्यै॒ वाङ्मा॒त्या हे॑म॒न्तो वा॒च्यः॑ प॒ङ्क्तिर्है॑म॒न्ती प॒ङ्क्त्यै नि॒धन॑वन्नि॒धन॑वत आग्रय॒णऽआ॑ग्रय॒णात्त्रि॑णवत्रयस्त्रि॒ᳪ᳭शौ त्रि॑णवत्रयस्त्रि॒ᳪ᳭शाभ्या॑ᳪ᳭ शाक्वररैव॒ते वि॒श्वक॑र्म॒ ऋषिः॑ प्र॒जाप॑तिगृहीतया॒ त्वया॒ वाचं॑ गृह्णामि प्र॒जाभ्यो॑ लो॒कं ता इन्द्र॑म् ॥ ५८ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां त्रयोदशोऽध्यायः ॥ १३ ॥

[इ॒यम् । उ॒परि॑ । म॒तिः । तस्यै॑ । वाक् । मा॒त्या । हे॒म॒न्तः । वा॒च्यः । प॒ङ्क्तिः । है॒म॒न्ती । प॒ङ्क्त्यै । नि॒धन॑व॒दिति॑ नि॒धन॑ऽवत् । नि॒धन॑वत॒ऽइति॑ नि॒धन॑ऽवतः । आ॒ग्र॒य॒णः । आ॒ग्र॒य॒णात् । त्रि॒ण॒व॒त्र॒य॒स्त्रि॒ᳪ᳭शौ । त्रि॒न॒व॒त्र॒य॒स्त्रि॒ᳪ᳭शा॒विति॑ त्रिनवऽत्रयस्त्रि॒ᳪ᳭शौ । त्रि॒ण॒व॒त्र॒य॒स्त्रि॒ᳪ᳭शाभ्या॑म् । त्रि॒न॒व॒त्र॒य॒स्त्रि॒ᳪ᳭शाभ्या॒मिति॑ त्रिनवत्रयस्त्रि॒ᳪ᳭शाभ्या॑म् । शा॒क्व॒र॒रै॒व॒ते । ऽइति॑ शाक्वर॒रै॑व॒ते । वि॒श्वक॑र्म्मेति॑ वि॒श्व । कर्म्मा । वाच॑म् ॥ लो॒कम् । ताः । इन्द्र॑म् ॥५८॥]

॥ इति वाजसनेयिसंहितापदे त्रयोदशोऽध्यायः ॥

(पञ्चम दशक को धरना।) यह ऊपर जो चन्द्रस्वरूपा मति (=वाग्) स्थित है। हे इष्टके! तुम मति (=वाक्) के स्वरूप वाली हो। उस तुम वाक्स्वरूपा को मैं चिति में धरता हूँ। वाणी से हेमन्त ऋतु उत्पन्न हुई। हे इष्टके! तुम हेमन्तऋतु-स्वरूपा हो। उस तुम हेमन्तस्वरूपा ईंट को मैं चिति में धरता हूँ। हेमन्तऋतु से पंक्तिछन्द उत्पन्न हुआ। हे इष्टके! तुम पंक्ति-छन्दस्वरूपा हो। उस तुम पंक्तिछन्दस्वरूपिणी को मैं चिति में धरता हूँ। पंक्तिछन्द से निधनवत्साम बना। हे इष्टके! तुम निधनवत्साम के स्वरूप वाली हो। उस तुम निधनवत्साम के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। निधनवत्साम से आग्रायणग्रह उत्पन्न हुआ। हे इष्टके! तुम आग्रायणग्रह के स्वरूप वाली हो। उस तुम आग्रायणग्रह के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। आग्रायणग्रह से त्रिणव और त्रयस्त्रिंश स्तोम उत्पन्न हुए। हे इष्टके! तुम त्रिणव और त्रयस्त्रिंश संज्ञक दोनों स्तोमों के स्वरूप वाली हो। उस तुम तत्स्वरूपा को मैं चिति में धरता हूँ। उन दोनों स्तोमों से क्रमशः शाक्वर-रैवत्साम उत्पन्न हुए। हे इष्टके! तुम उन शाक्वर-रैवत्सामों के स्वरूपवाली हो। उस तुम उन दो सामों के स्वरूप वाली ईंट को मैं चिति में धरता हूँ। उन दोनों सामों से विश्वकर्मा ऋषि (=वाक्) उत्पन्न है। हे इष्टके! तुम वाग्रूपा हो। तुम्हें मैं चिति में धरता हूँ। उस तुम प्रजापति-सृष्ट ईंट को चिति में धरकर मैं प्रजार्थ वाणी को ही पकड़ता हूँ। 'लोकम्पृण;' 'ता अस्य' तथा 'इन्द्रं विश्वा०' आदि मंत्रों से इन-इन ईंटों को धरना ॥ ५८ ॥

इति 'तत्त्वबोधिनी' हिन्दीव्याख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥

उ० अथ मध्ये । इयमुपरि मतिः । 'चन्द्रमा वा उपरि तद्यत्तमाहोपरीति उपरि हि चन्द्रमा । अथ यन्मतिरित्याह वाग्वै मतिः' । समानं व्याख्यानम् । लोकं तामिन्द्रमिति तिस्रः प्रतीकगृहीताः । लोकं पृण छिद्रं पृण । ता अस्य सूददोहसः । इन्द्रं विश्वा अवीवृधन् ॥ ५८ ॥

इति उवटकृतौ मन्त्रभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥

म० दशमन्त्रैः पञ्चमं दशकं रेतःसिग्भ्यामुत्तरां प्रथमां कृत्वा प्रादक्षिण्येनोपधेयम् । 'उपर्युपरिष्टात्' ( पा० ५ । ३ । ३१ ) इति निपातः । उपरि ऊर्ध्वदेशस्थश्चन्द्र इयं मतिः वाक् मन्यते ज्ञायते यया सा मतिः वागेव चन्द्रो भूलोपरि यस्तिष्ठति तद्रूपां सा० । चन्द्रमा वा उपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा अथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदᳪसर्वं मनुते 'वागेव चन्द्रमा भूलोपरिष्टात्तस्यौ तदेव तद्रूपमुपदधाति' ( ८ । १ । १ । ७ ) इति श्रुतेः । तस्यै चन्द्ररूपायास्तस्या मतेरुत्पन्नात एव मात्या मतेरियं मात्या या वाक् तद्रूपां सा० । 'वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीत' ( ८ । १ । २ । ८ ) इति श्रुतेः । वाचोऽपत्यं वाच्यः वाच उत्पन्नो यो हेमन्तस्तद्रूपां सा० । हेमन्तमृतुं वाचो निरमि० । हेमन्तस्येयं हैमन्ती या पङ्क्तिश्छन्दस्तद्रूपां सा० । पङ्क्तिश्छन्दो हेमन्तादृतोर्निरमि० । पङ्क्तेरुत्पन्नं यन्निधनवत्संज्ञं साम तद्रूपां सा० । पङ्क्त्यै चतुर्थी पञ्चम्यर्थे । पङ्क्त्यै छन्दसो निधनवत्साम निरमि० । निधनवतः साम्न उत्पन्नो य आग्रयणो ग्रहस्तद्रूपां सा० । निधनवतः साम्न आग्रयणं ग्रहं निरमि० । आग्रयणादुत्पन्नौ यौ त्रिणवत्रयस्त्रिंशौ द्वौ स्तोमौ तद्रूपां सा० । आग्रयणाद्ग्रहात्त्रिणवत्रयस्त्रिᳪशौ स्तोमौ निरमि० । त्रिणवत्रयस्त्रिंशाभ्यामुत्पन्ने ये द्वे शाक्वररैवते पृष्ठे त्वां तद्रूपां सा० । त्रिणवत्रयस्त्रिᳪशाभ्याᳪस्तोमाभ्याᳪशाक्वररैवते पृष्ठे निरमि० । विश्वकर्मा विश्वं सर्वं करोतीति विश्वकर्मा ऋषिः वागेव वाचा हि सर्वं कुरुते वाग्रूपां त्वां सा० । 'वाग्वै विश्वकर्मर्षिर्वाचा हीदᳪसर्वं कृतं तस्माद्वाग्विश्वकर्मर्षिः' ( १ । २ । ९ ) इति श्रुतेः । प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः वाचं गृह्णामि एभिर्दशमन्त्रैर्वाचमेव गृह्णाति । 'सकृत्सादयत्येकां तद्वाचं करोति' ( ८ । १ । २ । ९ ) इति श्रुतेः । अथ पञ्चकण्डिकासु प्राणमनश्चक्षुःश्रोत्रवाचां प्रजाभ्यो ग्रहणमित्यस्यार्थद्वयम् । प्रजाभ्य इति चतुर्थीपक्षे प्रजार्थं प्राणादीनां ग्रहणम् पञ्चाशदिष्टकास्थापने प्रजानां यजमानापत्यपश्वादीनां प्राणादयः पुष्टा भवन्तीत्यर्थः । प्रजाभ्य इति पञ्चमीपक्षे प्रजाभ्यो नानालोकेभ्यः सकाशात्प्राणादीन्गृह्णामि मद्वशगान्करोमीति प्राणभृतामुपधानेन सर्वाः प्रजा मद्वशगा भवन्त्वित्यर्थः । ( का० १७ । ६ । ५ ) लोकंपृणा दक्षिणाᳪसादध्यामध्यात् । आत्मनो दक्षिणकोणादारभ्यामध्यात् अधि स्वयमातृण्णापर्यन्तं लोकंपृणा उपदधाति तासां लोकंपृणेत्यभिमन्त्रणम् । ता अस्येति सूददोहःसंज्ञमन्त्रेणाधिवदनम् स्पृष्ट्वा पठनमिति सूत्रार्थः । 'मध्ये पुरीषं निवपति पूर्ववत्' ( का० १७ । ६ । ९ ) । स्वयमातृण्णोपरीन्द्रं विश्वेति मन्त्रेण मृत्क्षेपः । तिस्र ऋचः प्रतीकोक्ताः पूर्वमुक्तत्वात् ( अ० १२ क० ५४ । ५५ । ५६ ) ॥ ५८ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
पुष्कराद्यादि चित्यन्तो रामेन्द्वध्याय ईरितः ॥ १३ ॥

# चतुर्दशोऽध्यायः ।

ध्रु॒वक्षि॑तिर्ध्रु॒वयो॑निर्ध्रु॒वासि॑ ध्रु॒वं योनि॒मासी॑द साधु॒या । उख्य॑स्य के॒तुं प्र॑थ॒मं जु॒षा॒णाश्वि॒नाध्व॒र्यू सा॑दयतामि॒ह त्वा॑ ॥ १ ॥

[ ध्रुवक्षि॑तिरि॒ति॑ ध्रु॒वऽक्षि॑तिः । ध्रु॒वयो॑नि॒रिति॑ ध्रु॒वऽयो॑निः । ध्रु॒वा । अ॒सि॒ । ध्रु॒वम् । योनि॑म् । आ । सी॒द॒ । सा॒धु॒येति॑ साधु॒ऽया ॥ उख्य॑स्य । के॒तुम् । प्र॒थ॒मम् । जु॒षा॒णा । अ॒श्विना॑ । अ॒ध्व॒र्यूऽइत्य॑ध्व॒र्यू । सा॒द॒य॒ता॒म् । इ॒ह । त्वा॒ ॥ १ ॥ ]

( इस चौदहवें अध्याय में द्वितीय चिति के मंत्र संगृहीत हैं । ) यह द्वितीय चिति भूमि से ऊपर और अन्तरिक्ष से नीचे मानी गई है । इसके देवता दोनों अश्विनौ हैं । सर्वप्रथम पाँच 'अश्विनी'-संज्ञक इष्टकायें चिति में रखी जाती हैं । ) हे इष्टके ! अचल निवास, अचल कारण वाली और उखा की अग्नि के प्रथम स्थान का सेवन करने वाली तुम अचला हो, अतः रेतःसिग्वेला संज्ञक शुभ और अचलस्थान में प्रतिष्ठित होओ । देवों के यज्ञ में अध्वर्युभाव को प्राप्त दोनों अश्विनौ ही तुम्हे इस स्थान में प्रतिष्ठित करें ॥ १ ॥

उ० द्वितीयां चितिं देवा अपश्यन् तस्यां चितौ पञ्चाश्विन्यो यजुरन्ताः । अश्विनाध्वर्यू इत्यादियजुः । प्रथमा विराट् । द्वितीयाद्यास्त्रस्तस्त्रिष्टुभः । ध्रुवक्षितिः । या त्वं ध्रुवक्षितिः स्थिरनिवासा ध्रुवयोनिश्च अनश्वरस्थाना च ध्रुवा चासि स्वत एव तां त्वां ब्रवीमि । ध्रुवं स्थिरं योनिं स्थानम् । आसीद अधितिष्ठ । साधुया साधुम् । द्वितीयैकवचनस्य स्थाने या । उख्यस्याग्नेः केतुं प्रज्ञानं प्रथममाद्यं जुषाणा

सेवमाना । उख्यस्याग्नेः प्रथमं प्रज्ञानम् । 'इयमेव प्रथमा चितिस्तस्याश्चोपरिष्टान्निधीयते तस्मादेवमुच्यते' । उत्तरं यजुः । किंच अश्विनौ चाध्वर्यू सादयताम् इह रेतःसिग्वेलायां त्वा त्वाम् । केचिच्चतुर्थमेतं पादं वर्णयन्ति त्रिष्टुभं च ॥ १ ॥

**म०** त्रयोदशेऽध्याये प्रथमा चितिरुक्ता सा भूलोकरूपा । 'अयं वै लोकः प्रथमा चितिः' ( ८ । २ । १ । १ ) इति श्रुतेः । चतुर्दशेऽध्याये द्वितीयादिचितित्रयं वक्ष्यते । भूमेरूर्ध्वमन्तरिक्षादर्वाग्भागो द्वितीया चितिः । 'एतां द्वितीयां चितिमपश्यन् यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तेषामेष लोकः' ( ८ । २ । १ । २ ) इति श्रुतेः । देवैरश्विनौ प्रार्थितौ यद्युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यवो भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्वा 'तेऽश्विनावब्रुवन्' ( ८ । २ । १ । ३ ) इत्यादिकयोक्तम् । तत्रादौ पञ्चाश्विन्य इष्टकाः । द्वितीयचितिमन्त्रा देवदेवत्याः । 'आश्विनीर्ध्रुवक्षितिरिति प्रतिमन्त्रम्' ( का० १७ । ८ । १५ ) । पञ्चकण्डिकाभिराश्विनीसंज्ञा इष्टका रेतःसिग्वेलायामुपदधाति प्रतीष्टकं निर्से इति सूत्रार्थः । पञ्चाश्विनीदेवत्याः प्रथमा विराट् चतस्रस्त्रिष्टुभो यजुरन्ताः । अश्विनाध्वर्यू इत्यादि यजुः । अदित्यास्त्वार्षी त्रिष्टुबेकाधिका पादानियमात् । हे इष्टके, यतस्त्वं ध्रुवा स्थिरासि अतो ध्रुवं स्थिरं योनिं स्थानं रेतः सिग्वेलालक्षणमासीद अधितिष्ठ । कीदृशम् । साधुया साधुं श्रेष्ठं 'सुपां सुलुक्' इत्यमो यादेशः । कीदृशी त्वम् । ध्रुवक्षितिः ध्रुवा स्थिरा क्षितिर्निवासो यस्याः सा । ध्रुवा अचला योनिः कारणं यस्याः सा । तथा उख्यस्याग्नेः प्रथममाद्यं केतुं स्थानं प्रथमचितिरूपं जुषाणा सेवमाना । अथवा 'अग्निरुख्यस्तस्यैष प्रथमः केतुर्यत्प्रथमा चितिस्तां जुषाणा' ( ८ । २ । १ । ४ ) इति श्रुतेः । इतः परं यजुः । किंच अश्विना देवानामध्वर्यू इह रेतःसिग्वेलायां हे इष्टके, त्वा त्वां सादयतामुपधत्ताम् । केचिदिदं यजुश्चतुर्थपादेन परिकल्प्य त्रिष्टुभं वदन्ति ॥ १ ॥

कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः । अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगायाश्विनाध्वर्यू सादयतामिह त्वा ॥ २ ॥

[कुलायिनी । घृतवतीतिघृत वती । पुरन्धिरितिपुरम् धिः । स्योने । सीद । सदने । पृथिव्याः ॥ अभि । त्वा । रुद्राः । वसवः । गृणन्तु । इमा । ब्रह्म । पीपिहि । सौभगाय ॥२॥]

हे अश्विनी इष्टके ! घोसले से रेतःसिग्लक्षण स्थान में स्थित होने वाली, होम किये जाने वाले घृत से संगत और अनेक ईंटों को धारण करने वाली तुम द्वितीय चिति के सुखद स्थान में स्थित होओ । रुद्र और वसुगण प्रभृति देव तुम्हारी इस चिति में स्थित होने पर सतत स्तुति करें । हे इष्टके ! तुम हमारे इन मंत्रों को सफल बना कर अभिवर्द्धित करो और यजमान के सौभाग्य के लिए यहाँ स्थित रहो । देवों के अध्वर्यु अश्विनौ तुम्हें इस द्वितीय चिति में स्थापित करें ॥ २ ॥

**उ०** कुलायिनी । कुलायं गृहं तदाकारा कुलायिनी । सा हि रेतःसिग्वेलायामिष्टकाभिरुपहिताभिर्गृहाकारा भवति घृतवती भविष्यता योगेन । इह हि वसोर्धाराद्या आहुतयो होष्यन्ते । पुरंधिः । बहु हि इष्टकाजातमियं धारयति चितिसंबद्धम् । या त्वमित्थंभूता तां त्वां ब्रूमः । स्योने सीद सदने पृथिव्याः सुखरूपे उपविश स्थाने पृथिव्याः । किंच अभि त्वा अभिगृणन्तु त्वां रुद्रादयः । किंच । इमां इमानि ब्रह्माणि पीपिहि आप्यायस्व । सौभगाय महते ऐश्वर्याय । अश्विनेति व्याख्यातम् ॥ २ ॥

**म०** हे इष्टके, पृथिव्याः सदने प्रथमचितिरूपे स्थाने स्योने सुखरूपे त्वं सीद तिष्ठ । 'पृथिवी वै प्रथमा चितिस्तस्यै शिवे स्योने सीद सदने' ( ८ । २ । १ । ५ ) इति श्रुतेः । त्वम् । कुलायिनी 'कुलायो नीडमस्त्रियाम्' कुलायो नीडं गृहमस्या अस्तीति गृहाकारा । रेतःसिग्वेलायामिष्टकोपचिता सा गृहाकारा भवति । 'कुलायमिव वै द्वितीया चितिः' ( ८ । २ । १ । ५ ) इति श्रुतेः । अत्र सादृश्यार्थ इनिः । तथा घृतवती होष्यमाणाज्ययुता वसोर्धारा ह्यत्र होष्यन्ते । पुरन्धिः पुरं बहु इष्टकाजातं दधातीति पुरु बहुधा धीयते स्थाप्यत इति वा । किंच रुद्रा वसवश्चोपलक्षणम् । सर्वे देवाः त्वा त्वामभिगृणन्तु स्तुवन्तु । किंच सौभगाय ऐश्वर्याय इमा इमानि ब्रह्म ब्रह्माणि मन्त्रान् पीपिहि आप्यायस्व मन्त्रान् प्राप्नुहि । अस्मन्मन्त्रोपहिता सौभाग्याय भवेति भावः । इमेति सुप आकारः । ब्रह्मेति सुपो लोपः । 'पि गतौ' तुदादिः । 'बहुलं छन्दसि' ( पा० २ । ४ । ७६ ) इति शपः श्लुः 'श्लौ' ( पा० ६ । १ । १० ) इति द्वित्वं 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६ । १ । ७ ) इति अभ्यासदीर्घः । अश्विनेत्यादि पूर्ववत् ॥ २ ॥

स्वैर्दक्षैर्दक्षपितेह सीद देवानांꣳ सुम्ने बृहते रणाय । पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्वाश्विनाध्वर्यू सादयतामिह त्वा ॥३॥

[स्वैः । दक्षैः । दक्षपितेतिदक्ष पिता । इह । सीद । देवानाम् । सुम्ने । बृहते । रणाय ॥ पितेवेतिपिता

इ॒व । ए॒धि । सू॒नवे॑ । आ । सु॒शे॒वेति॑ सु॒ शेवा॑ । स्वा॒वे॒शेति॑ सु आवे॒शा । त॒न्वा॑ । सम् । वि॒श॒स्व॒ ॥३॥]

वीर्य को सुरक्षित रखने वाली हे इष्टके! अपने समस्त सामर्थ्यों के साथ देवों के सुख और अत्यधिक सौन्दर्य के निमित्त तुम इस द्वितीय चिति में स्थान ग्रहण करो। सुख से सेवनीया तुम, पुत्र के प्रति पिता के सुखद होने के समान यहाँ चिति में स्थित होकर अभिवृद्ध होओ। अपने सुखप्रवेश्य शरीर से तुम यहाँ द्वितीय चिति में प्रवेश करो। हे इष्टके! देवों के अध्वर्यु अश्विनौ ही तुम्हें यहाँ स्थापित करें ॥ ३ ॥

**उ०** स्वैर्दक्षैः स्वैर्वीर्यैः । दक्षपिता वीर्यस्य पालयित्री सती इह द्वितीयायां चितौ सीद अवस्थानं कुरु । दक्षशब्द इह वीर्यवचनः । प्रयोजनमाह । देवानां सुम्ने सुखाय । कथं नाम देवाः सुखं प्राप्नुयुरिति । बृहते रणाय महते च रमणीयाय यज्ञक्रतवे । किंच । पितेवैधि सूनवे पिता इव भव पुत्राय । आसुशेवा मर्यादया साधु सुखयित्री । किंच स्वावेशाः स्वावेशेति विभक्तिव्यत्ययः । स्वावेशया तन्वा आत्मना संविशस्व अवस्थानं कुरु । अश्विनावध्वर्यू । उक्तार्थः ॥ ३ ॥

**म०** हे इष्टके, त्वमिह द्वितीयायां चितौ सीद तिष्ठ स्वैर्दक्षैः वीर्यैः सामर्थ्यैः सह । दक्षशब्दोऽत्र वीर्यार्थः । 'स्वेन वीर्येणेह सीद' ( ८ । २ । १ । ६ ) इति श्रुतेः । कीदृशी । दक्षपिता दक्षं वीर्यं पातीति वीर्यस्य पालयित्री । किमर्थं स्थातव्यं तत्राह । रणाय रमणीयाय बृहते सुम्ने सुम्नाय सुखाय । सप्तमी चतुर्थ्यर्थे । 'देवानाᳪ सुम्नाय महते रणाय' ( ८ । २ । १ । ६ ) इति श्रुतेः । देवाः सुखिनो भवन्त्विति तिष्ठेत्यर्थः । किंच आसमन्ताद्भावेन सुशेवा शोभनं शेवं सुखं यस्यास्तादृशी सर्वदा सुखयित्री एधि भव 'घ्वसोरेद्धौ—' ( पा० ६ । ४ । ११९ ) इत्येकारः । तत्र दृष्टान्तः । पिता सूनव इव यथा पिता जनकः सूनवे पुत्राय सुशेवः सुखयिता भवति तद्वत् । किंच स्वावेशा सुखेनाविशति स्वावेशा । प्रथमा तृतीयार्थे । स्वावेशया सुखप्रवेशवत्या तन्वा शरीरेण संविशस्व अवस्थानं कुरु । 'स्वावेशेनात्मना संविशस्व' ( ८ । २ । १ । ६ ) इति श्रुतेः । अश्विनेत्युक्तम् ॥ ३ ॥

पृ॒थि॒व्याः पुरी॑षम॒स्यप्सो॒ नाम॒ तां त्वा॒ विश्वे॑ अ॒भिगृ॑णन्तु दे॒वाः । स्तोम॑पृष्ठा घृ॒तव॑ती॒ह सी॑द प्र॒जाव॑द॒स्मे द्रवि॒णाय॑जस्वा॒श्विना॑ध्व॒र्यू सा॑दयता॒मि॒ह त्वा॑ ॥ ४ ॥

[पृ॒थि॒व्याः । पुरी॑षम् । अ॒सि॒ । अ॒प्स॒ः । नाम॑ । ताम् । त्वा॒ । विश्वे॑ । अ॒भि । गृ॒ण॒न्तु॒ । दे॒वाः ॥ स्तोम॑पृ॒ष्ठेति॒ स्तोम॑ पृ॒ष्ठा । घृ॒तव॑ती॒ति॑ घृ॒त व॑ती । इ॒ह । सी॒द॒ । प्र॒जाव॒दिति॑ प्र॒जा व॑त् । अ॒स्मे इत्य॒स्मे । द्रवि॑णा । आ । य॒ज॒स्व॒ ॥४॥]

हे इष्टके! तुम द्वितीय चिति की पूरिका हो। तुम जलों का कारणभूत रस हो। उस तुम अश्विनी इष्टका को सभी देव प्रशंसित करें। त्रिवृद् आदि स्तोम और रथन्तरादि पृष्ठों वाली और अमृत घृत से संगत तुम हे इष्टके! इस द्वितीय चिति में स्थान ग्रहण करो। हे इष्टके! तुम हमें सन्तान के साथ-साथ धन प्रदान करो। देवों के अध्वर्यु अश्विनौ ही तुम्हें हे इष्टके! यहाँ द्वितीय चिति में स्थापित करें ॥ ४ ॥

**उ०** पृथिव्याः पुरीषम्। या त्वं पृथिव्याः प्रथमायाश्चितेः पुरीषमिवासि । 'पृथिवी वै प्रथमा चितिः तस्या एतत्पुरीषमिव यद्द्वितीया' इति श्रुतिः । अप्सो नाम रसो नाम । अप्स इति रसपर्यायं दर्शयति । अपः सनोतीत्यप्सः । अपां हि रसो गुणः । 'तस्य वा एतस्य यजुषो रस एवोपनिषत्' इत्येतच्छ्रुतिर्दर्शयति । तां त्वामुपधीयमानां विश्वेदेवा अभिगृणन्तु अभिष्टुवन्तु । त्वमपि च स्तोमपृष्ठा घृतवती च इह सीद द्वितीयस्यां चितौ । यां स्तोमस्यान्तᳪस्य(?) मानों भवति तैरेषा स्तोमपृष्ठा घृतवती च वसोर्धारादिभिर्होमैः । ततः प्रजावदस्मे द्रविणा यजस्व । प्रजासंयुक्तानि अस्मभ्यं द्रविणानि देहि । यजतिर्दानार्थः । शेषमुदक् ॥ ४ ॥

**म०** हे इष्टके, त्वं पृथिव्याः प्रथमचितेः पुरीषं पूरकं वस्त्वसि । 'पृथिवी वै प्रथमा चितिस्तस्या एतत्पुरीषमिव यद्द्वितीया' ( ८ । २ । १ । ७ ) इति श्रुतेः । पृणाति पूरयति पुरीषम् । 'शॄपॄभ्यां कित्' ( उणा० ४ । २७ ) पृणातेरीषन्प्रत्ययः । किंच कित्त्वात् 'उदोष्ठ्यपूर्वस्य' ( पा० ७ । १ । १०२ ) इत्युदादेशो रपरत्वं च । नित्त्वादाद्युदात्तः । अपः सनोति ददातीत्यप्सो नामापां कारणीभूतो रसश्च त्वमसि । तां तादृशीं प्रथमचितिपूरिकां जलदरसभूतां त्वां त्वा विश्वे सर्वे देवा अभिगृणन्तु सर्वतः स्तुवन्तु । किंच स्तोमपृष्ठाः स्तोमास्त्रिवृदादयः पृष्ठानि रथन्तरादीनि पठिष्यमाणानि यस्यां सा तादृशी स्तोमपृष्ठवती । घृतवती होष्यमाणाज्ययुता सतीह द्वितीयश्चितौ सीद तिष्ठ । ततः प्रजावत् पुत्रपौत्रादिप्रजायुक्तं द्रविणा द्रविणं धनमस्मे अस्मभ्यमायजस्व समन्ताद्देहि । यजतिरिह दानार्थः । अस्मे इति सुपां सुलुगिति विभक्तेः शेआदेशः । व्याख्यातमन्यत् ॥ ४ ॥

अदि॑त्यास्त्वा पृ॒ष्ठे सा॑दयाम्य॒न्तरि॑क्षस्य ध॒र्त्रीं वि॒ष्टम्भ॑नीं दि॒शामधि॑पत्नीं॒ भुव॑नानाम् । ऊ॒र्मिर्द्र॒प्सो अ॒पाम॑सि वि॒श्वक॑र्मा त॒ ऋषि॑र॒श्विना॑ध्व॒र्यू सा॑दयता॒मि॒ह त्वा॑ ॥ ५ ॥

[अदित्याः । त्वा । पृष्ठे । सादयामि । अन्तरिक्षस्य । धर्त्रीम् । विष्टम्भनीम् । दिशाम् । अधिपत्नीमित्यधिपत्नीम् । भुवनानाम् ॥ ऊर्मिः । द्रप्सः । अपाम् । असि । विश्वकर्मेति विश्वऽकर्मा । ते । ऋषिः ॥ शुक्रः । शुचिः । ग्रैष्मौ ॥५॥]

अन्तरिक्ष लोक को धारण करने वाली, पूर्व प्रभृति दिशाओं को थामने वाली, भूतमात्र की स्वामिनी तुम अश्विनी इष्टका को हे इष्टके ! मैं इस प्रथम चिति के ऊपर स्थापित करता हूँ। हे इष्टके ! तुम जलों की लहर और उनका सारभूत रस हो। विश्वकर्मा प्रजापति तुम्हारा द्रष्टा (=बनाने वाला) है। देवों के अध्वर्यु अश्विनौ तुम्हें इस द्वितीय चिति में स्थापित करें ॥ ५ ॥

**उ०** अदित्यास्त्वा । या त्वम् ऊर्मिः कल्लोलराशिः द्रप्सः रसः अपामसि । यस्याश्च ते तव विश्वकर्मा प्रजापतिर्ऋषिर्द्रष्टा । तां त्वाम् अदित्याः पृथिव्याः पृष्ठे प्रथमायाश्चितेरुपरि सादयामि । कथंभूतामित्यत आह । अन्तरिक्षलोकस्य धर्त्रीं धारयित्रीम् विष्टम्भनीं संस्तम्भनीम् अन्तरिक्षस्यैव । दिशामधिपत्नीं दिशामीशित्रीं भूतजातानां च । शेषं समानोदर्कम् ॥ ५ ॥

**म०** हे इष्टके, अदित्याः प्रथमचितिरूपायाः पृथिव्याः पृष्ठे उपरि त्वा त्वां सादयामि स्थापयामि । किंभूतां त्वाम् । अन्तरिक्षस्य भुवर्लोकस्य धर्त्रीं धारयित्रीम् । दिशां पूर्वादीनां विष्टम्भनीं संस्तम्भनकर्त्रीं भुवनानां भूतजातानामधिपत्नीं स्वामिनीम् । किंच त्वमपां द्रप्सो रस ऊर्मिरसि रसरूपः कल्लोलस्त्वमसि । विश्वकर्मा प्रजापतिस्ते तव ऋषिः द्रष्टा । तं त्वामश्विनौ सादयतामित्युक्तम् ॥ ५ ॥

शुक्रश्च शुचिश्च ग्रैष्मावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे । ग्रैष्मावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ६ ॥

(दो 'ऋतव्या' संज्ञक ईंटों का चिति में धरना।) जेठ और अषाढ मास ग्रीष्म ऋतु होते हैं। हे ऋतव्य इष्टके! तुम इस द्वितीय चिति को अन्दर से संश्लिष्ट रखने वाली हो। तुम दोनों द्यावापृथिवी को हमारे अनुकूल बनाओ। जल और ओषधियों को हमारे अनुकूल बनाओ। तुम सब एक-से कर्मों वाली होकर हे इष्टकाओं! मेरे श्रेष्ठत्व के निमित्त बन जाओ। यह जो एकमना सब अग्नियाँ (ईंटें) द्यावापृथिवी के मध्य स्थित हैं—वे इन दोनों ऋतव्या ईंटों को ग्रीष्म ऋतु समझती हुई उनसे ही संगता होवें; जैसे सभी देव इन्द्र को सम्प्राप्त होते हैं। उस देवता के द्वारा स्थापित की जाकर अंगिरा के चयन में ध्रुवभाव से स्थित होने के समान यहाँ इस हमारी द्वितीय चिति में हे ऋतव्या ईंटों ! तुम दोनों अचल होकर स्थित होओ ॥ ६ ॥

**उ०** ऋतव्य उपदधाति । शुक्रश्च शुचिश्च व्याख्यातम् ॥ ६ ॥

**म०** 'शुक्रश्च शुचिश्चेत्यृतव्ये पूर्वयोरुपरि' (का० १७ । ८ । १६) । प्रथमचित्युपहितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये पद्ये प्राग्लक्षणे अनूकमभित उदङ्मुख उपदधाति शुक्रश्च शुचिश्चेति प्रत्येकमुपधाय । ग्रैष्मावृतू इति मन्त्रशेषो द्वे अप्यालभ्य पठ्य इति सूत्रार्थः । उत्कृतिश्छन्दः । शुक्रो ज्येष्ठमासः शुचिराषाढः तौ ग्रैष्मावृतू ग्रीष्मसंबन्धिनौ ऋत्ववयवौ । अन्यद्व्याख्यातम् ॥ ६ ॥

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ ७ ॥

[सजूरिति सऽजूः । ऋतुभिरित्यृतुऽभिः । विधाभिरिति विऽधाभिः । देवैः । देवैः । वयोनाधैरिति वयःऽनाधैः । अग्नये । त्वा । वैश्वानराय । वसुभिरिति वसुऽभिः । रुद्रैः । आदित्यैः । विश्वैः । देवैः ॥७॥]

(पाँच 'वैश्वदेवी' ईंटों को चिति में धरना।) हे वैश्वदेवि इष्टके ! ऋतुओं के साथ समान प्रीति, आपः के साथ समान प्रीति, देवों के साथ समान प्रीति और बाल-युवा-वृद्धादि अवस्थाओं को जोड़ने वाले प्राणदेवों के साथ समान प्रीति तुम वैश्वदेवी इष्टका को सबके नेता अग्नि के लिए देवों के अध्वर्यु अश्विनौ ही इस द्वितीय चिति में स्थापित करें। ऋतुओं, आपः, वसुगणों और बाल्यादि अवस्थाओं को बाँधने वाले प्राणदेवों के साथ समान प्रीति तुम वैश्वदेवी इष्टका को विश्व के नेता अग्नि के निमित्त देवाध्वर्यु अश्विनौ इस द्वितीय चिति में स्थापित करें। हे इष्टके। ऋतुओं, आपः, रुद्रगणों और बाल्यादि अवस्थाओं को जोड़ने वाले प्राणदेवों के साथ समान प्रीति तुम वैश्वदेवी इष्टका को विश्व के नेता अग्नि के निमित्त देवाध्वर्यु अश्विनौ ही इस द्वितीय चिति में स्थापित

करें। हे इष्टके! ऋतुओं, जलों, आदित्यगणों और बाल्यादि अवस्थाओं को जोड़ने वाले प्राणदेवों के साथ समान प्रीति तुम वैश्वदेवी इष्टका को विश्व के नेता अग्नि के निमित्त देवाध्वर्यु अश्विनौ ही इस द्वितीय चिति में स्थापित करें। ऋतुओं, जलों, विश्वेदेवों और बाल्यादि अवस्थाओं को जोड़ने वाले प्राणदेवों के साथ समान प्रीति तुम वैश्वदेवी इष्टका को विश्व के नेता अग्नि के निमित्त इस हमारी द्वितीय चिति में देवों के अध्वर्यु स्वयं अश्विनौ ही स्थापित करें ॥ ७ ॥

**उ०** वैश्वदेवीरुपदधाति । विश्वेषांदेवानामार्षम् । सजूऋतुभिः । यथा समानजोषणः ऋतुभिः प्रजापतिर्भूत्वा इष्टका उपहितवान् । यथाच समानजोषणः विधाभिः । 'आपो वै विधाः । अद्भिर्हीदं सर्वं विहितम्' । यथाच समानजोषणो देवैः । च समानजोषमाणः देवैर्वयोनाधैः । 'प्राणा वै देवा वयोनाधाः । प्राणैर्हीदं सर्वं वयुनं नद्धं अथो छन्दांसि वै देवा वयोनाधाः । छन्दोभिर्हीदं सर्वं प्रज्ञानं नद्धम्' । एवमहमपि एताभिर्देवताभिः समानप्रीतिर्भूत्वा उपदधामि । अग्नये वैश्वानराय त्वाम् । संवत्सरो वा अग्निर्वैश्वानरः । अश्विनौ च अध्वर्यू सादयतामिह त्वाम् । एवमुत्तरेष्वपि मन्त्रेषु वसुरुद्रादित्यविश्वेदेवा योज्याः ॥ ७ ॥

**म०** 'वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम्' ( का० १७ । ८ । १७ ) पञ्च मन्त्रैः पञ्च वैश्वदेवीसंज्ञा इष्टकाः पूर्वादिषूपदधातीत्यर्थः । विश्वदेवदृष्टानि विश्वदेवदेवत्यानि पञ्च यजूंषि । हे इष्टके, देवानामध्वर्यू अश्विना अश्विनौ तां त्वा त्वामिह स्थाने द्वितीयचितौ सादयताम् । किमर्थम् । वैश्वानराय विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितायाग्नयेऽग्नितृप्तये । अग्नये त्वेति त्वाशब्दो या इति प्रथमार्थे । प्रातिपदिकसुपोर्व्यत्ययः । तां काम्, या त्वमृतुभिः सजूः जोषणं जुट् प्रीतिः 'जुषी प्रीतिसेवनयोः' संपदादित्वाद्भावे क्विप् । समाना जूः प्रीतिर्यस्याः सा सजूः 'समानस्य छन्दस्यमूर्ध–' ( पा० ६ । ३ । ८४ ) इति समानस्य सादेशः । वसन्तादिभिर्या त्वं प्रीतिमती । तथाविधाभिः या त्वम् सजूः असि विदधति सृजन्ति जगदिति विधा आपस्ताभिः । 'आपो वै विधा अद्भिर्हीदꣳसर्वं विहितम्' ( ८ । २ । २ । ८ ) इति श्रुतेः । 'अप एव ससर्जादौ' ( मनुः १ । ८ ) इति स्मृतेश्च । तथा देवैरिन्द्रादिभिश्च सजूः तथा वयो बाल्यादि नह्यन्ति बध्नन्ति ते वयोनाधाः प्राणा देवा दीप्यमानास्तैश्च सजूः । 'प्राणा वै वयोनाधाः प्राणैर्हीदꣳसर्वं वयुनं नद्धम्' ( ८ । २ । २ । ८ ) इति श्रुतेः । यद्वा वयोनाधैर्देवैश्छन्दोभिः सजूः । 'अयो छन्दाꣳसि वै देवा वयोनाधाश्छन्दोभिर्हीदꣳसर्वं वयुनं नद्धम् ( ८ । २ । २ । ८ ) इति श्रुतेः । एवमुत्तरमन्त्रेष्वपि । यद्वा ऋतुदेवप्राणान् जनयित्वा तैः सजूः सयुग्भूत्वा प्रजापतिर्यथा त्वामुपहितवानेवमहमप्यग्नये त्वामुपदधामीति शेषः । अश्विनौ चेह त्वां सादयताम् 'तद्दतून् प्राजनयदृतुभिर्वै सयुग्भूत्वा' ( ८ । २ । २ । ८ ) इति श्रुतेः । उत्तरचतुर्मन्त्रेषु वसुभिः रुद्रैः आदित्यैर्विश्वैर्देवैः सजूरिति विशेषः । शेषं पूर्वतुल्यम् ॥ ७ ॥

**प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकय । अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरय ॥ ८ ॥**

[ प्राणम् । मे । पाहि । अपानमित्यप आनम् । व्यानमितिवि आनम् । चक्षुः । उर्व्या । वि । भाहि । श्रोत्रम् । श्लोकय ॥ अपः । पिन्व । ओषधीः । जिन्व । द्विपादितिद्वि पात् । अव । चतुष्पात् । चतुःपादितिचतुःपात् । पाहि । दिवः । वृष्टिम् । आ । ईरय ॥८॥ ]

( पाँच 'प्राणभृत्' संज्ञक ईंटों को द्वितीय चिति में धरना । ) हे प्राणभृत्संज्ञक इष्टके! तुम मेरे प्राण की रक्षा करो; तुम मेरे अपान की रक्षा करो; तुम मेरे व्यान की रक्षा करो, मेरे चक्षु को दूर तक देखने वाला बनाओ; मेरे श्रोत्र को शब्द के सुनने में समर्थ बनाओ; जलों को बढ़ाओ; ओषधियों में प्राण या बल डालो; दो पैरों वाले मनुष्यादि की रक्षा करो; चार पैरों वाले गवादि पशुओं की रक्षा करो और द्युलोक ( =सूर्य ) से वृष्टि को बरसाओ ॥ ८ ॥

**उ०** प्राणभृत उपदधाति । प्राणं मे पाहि गोपाय । अपानं मे पाहि । व्यानं मे पाहि । चक्षुर्मे उर्व्या विभाहि विभावय । श्रोत्रं मे मम श्लोकय । श्लोक इति वाङ्नामसु पठितम् श्लोकं पाहि श्रोत्रं कुरु । अपस्या उपदधाति । अपः पिन्व । पिन्वतिः सेचनार्थः । ओषधीर्जिन्व । जिन्वतिः प्रीतिकर्मा । द्विपादवद्विपादमिति विभक्तिव्यत्ययः । अव गोपाय । चतुष्पात्पाहि चतुष्पादं गोपाय । दिवो वृष्टिमेरय द्युलोकाद्वृष्टिं आईरय आगमय ॥ ८ ॥

**म०** 'प्राणभृतः प्राणं म इति' ( का० १७ । ८ । २० ) पञ्चयजुर्भिः प्राणभृत्संज्ञका इष्टकाः पूर्वादिषूपदधाति । पञ्च वायुदेवत्यानि यजूंषि । 'प्राणो वै वायुर्वायुमेवास्मिन्नेतद्दधाति' ( ८ । २ । ३ । २ ) इति श्रुतेः । हे इष्टके, त्वं मे मम प्राणं प्राणरूपं वायुं पाहि पालय । एवमपानं मम पाहि । व्यानं वायुं च मे मम पाहि । उर्व्या विस्तीर्णया दृष्ट्या मे चक्षुर्विभाहि विशेषेण प्रकाशय । दर्शनसमर्थं कुर्वित्यर्थः । मम श्रोत्रं कर्णेन्द्रियं श्लोकय सङ्घाते शक्तं कुरु । 'श्लोक सङ्घाते' बहुशब्दश्रवणसमर्थं कुर्वित्यर्थः । 'अपः पिन्वेत्यपस्याः' ( का० १७ । ८ । २१ ) । पञ्चमन्त्रैरपस्यासंज्ञा इष्टका उपदधाति । अब्देवत्यानि पञ्च यजूंषि । हे इष्टके, त्वमपो जलानि पिन्व सिञ्च । पिन्वतिः सेचनार्थः । ओषधीर्जिन्व प्रीणय । जिन्वतिः

प्रीतिकर्मा । द्विपान्मनुष्यशरीरमव रक्ष । चतुष्पात्पशुशरीरं पाहि पालय । दिवो द्युलोकाद्वृष्टिमेरय आ समन्तात्प्रवर्तय ॥ ८ ॥

**मूर्धा वयः प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दो विष्टम्भो वयोऽधिपतिश्छन्दो विश्वकर्मा वयः परमेष्ठी छन्दो वस्तो वयो विवलं छन्दो वृष्णिर्वयो विशालं छन्दः पुरुषो वयस्तन्द्रं छन्दो व्याघ्रो वयोऽनाधृष्टं छन्दः सिꣳहो वयश्छदिश्छन्दः पृष्ठवाड्वयो बृहती छन्द उक्षा वयः ककुप्छन्दऽ ऋषभो वयः सतोबृहती छन्दः ॥ ९ ॥**

[मूर्धा । वयः । प्रजापतिरितिप्रजा पतिः । छन्दः । क्षत्रम् । मयन्दम् । विष्टम्भः । अधिपतिरित्यधि पतिः । विश्वकर्मेतिविश्व कर्मा । परमेष्ठी । परमेस्थीति परमे स्थी । वस्तः । विवलमितिवि वलम् । वृष्णिः । विशालमितिवि शालम् । पुरुषः । तन्द्रम् । व्याघ्रः । अनाधृष्टम् । सिꣳहः । छदिः । पृष्ठवाडितिपृष्ठ वाट् । बृहती । उक्षा । ककुप् । ऋषभः । सतोबृहतीतिसतः बृहती ॥९॥]

(दक्षिण-उत्तर-पश्चिम कोणों में पाँच-पाँच और पूर्व में चार 'वयस्या' संज्ञक ईंटों को धरना)। मूर्धा प्रधान पशु—जो गायत्री छन्द का रूप धरकर उसके पास से भागा था—उस पशु को गायत्री छन्द और उस पशु की वय में होकर प्रजापति ने पुनः प्राप्त किया। हे वयस्या इष्टके! उस तुम गायत्री छन्द में तत्तद् अवस्था वाले पशु रूप प्रजापतिस्वरूपिणी को मैं इस द्वितीय चिति में धरता हूँ। मयन्दछन्द के रूप में बल-प्रधान प्रजापति ने उस वय को धारण करके मयन्द (=अनिरुक्त) पशु को पुनः प्राप्त किया था। उस मयन्दप्रजापतिस्वरूपिणी तुम वयस्या इष्टका को मैं इस द्वितीय चिति में धरता हूँ। अधिपति छन्दरूप प्रजापति ने धारक स्वभाव पशु को उस अवस्था वाला होकर पुनः प्राप्त किया था। हे अधिपति छन्द रूप प्रजापतिस्वरूपिणी वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। परमेष्ठीछन्दरूप प्रजापति ने सर्वकर्मक्षम पशुओं को उस वय वाला होकर पुनः प्राप्त किया था। हे तत्स्वरूपिणी वयस्या इष्टके! मैं तुम्हें द्वितीय चिति में धरता हूँ। (इस प्रकार चार वय और चार अवस्थाओं को लेकर आठ प्रकार के स्वरूपों वाले प्रजापति ने पन्द्रह पशुओं को पकड़ा। प्रजापति का यह स्वरूप अष्टाक्षरा गायत्री को ही संकेतित करता है। अर्थात् अष्टाक्षरा गायत्री के जाप से पन्द्रह प्रकार के पशु (या उनके बल) प्राप्त किये जा सकते हैं।) एकपदा नाम के छन्द का स्वरूप धारण करके प्रजापति ने अज (=बकरे) को उसी की वय का होकर उसे पुनः प्राप्त किया था। हे वयस्या इष्टके! एकपदाछन्दरूप प्रजापति के स्वरूप वाली तुम वयस्या ईंट को मैं इस द्वितीय चिति में धरता हूँ। विशाल (=द्विपदा गायत्री) छन्द रूप प्रजापति ने संवननसमर्थ मेष (=मेढ़ा) को उसी की आयु वाला होकर पुनः प्राप्त किया था। हे द्विपदागायत्रीस्वरूप प्रजापति के स्वरूप वाली वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। तन्द्र (=पंक्ति) छन्द का स्वरूप धारण करके प्रजापति ने पुरुष को, उसकी आयु वाला होकर पुनः प्राप्त किया था। हे पंक्तिछन्दस्वरूप प्रजापति के स्वरूपवाली वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। अनाधृष्ट (=विराट्) छन्द का स्वरूप धारण करके प्रजापति ने व्याघ्र को, उसकी आयु वाला होकर पुनः प्राप्त किया था। हे विराट्छन्दस्वरूप प्रजापति के स्वरूप वाली वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। छदि (=अतिछन्द) छन्द का स्वरूप धारण करके प्रजापति ने सिंह को, उसकी वय वाला होकर पुनः प्राप्त किया था। उस अतिछन्दछन्दस्वरूप प्रजापति के स्वरूप वाली हे वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। बृहती छन्द का स्वरूप धारण करके प्रजापति ने पृष्ठवाह (=पाँच वर्ष के कोई भी) पशु को पाँच का होकर पुनः प्राप्त किया था। हे बृहतीछन्द स्वरूप प्रजापति के स्वरूप वाली वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। ककुप् छन्द का स्वरूप धारण करके प्रजापति ने सेचनसमर्थ आयु वाले (=वयस्क) पशुओं को, वयस्क होकर पुनः प्राप्त किया था। हे ककुप्छन्दस्वरूपी प्रजापति के स्वरूपवाली वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। सवो बृहती छन्द का स्वरूप धारण करके प्रजापति ने पूर्णायु होकर पुनः प्राप्त किया था। बृहतीछन्दरूपी प्रजापति के स्वरूप वाली हे वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ ॥ ९ ॥

**उ०** पयस्या उपदधाति। अत्र श्रुत्युक्तं निदानम्। प्रजापतेर्विश्रस्तात्पशव उदक्रामन् छन्दांसि भूत्वा तान् गायत्री भूत्वा वयसाप्नोत्प्रजापतिः। मूर्धावयः प्रजापतिश्छन्दः चतुर्भिर्मन्त्रैर्गायत्रीरूपः प्रजापतिः कल्प्यते। मूर्धा प्रजापतिप्राधान्यात्। वयः शरीरावस्था। प्रजापतिः स्वयमेव छन्दः। क्षत्रं वयः प्रजापतिर्वै क्षत्रं वयोभवत्। मयन्दछन्दः अनिरुक्तत्वात्प्रजापतिः। मयं सुखं ददातीति मयन्दः। विष्टम्भो वयः। प्रजापतिर्विष्टम्भः। सहीदं सर्वं विष्टम्नोति। अधिपतिश्छन्दः। प्रजापतिर्वा अधिपतिः। विश्वकर्मा वयः प्रजापतिर्वै विश्वकर्मा परमेष्ठीछन्दः। आपो वै प्रजापतिः परमेष्ठी। अयमष्टावयवो गायत्रीरूपः प्रजापतिः पञ्चदशवक्ष्यमाणान्पशून्गृह्णाति। वयसा वयोवस्थया जरया। 'असाजीर्णं पशुं वयसाप्त' इति श्रुतिः। वस्तो वयो विवलं छन्दः। वस्तःपशुः विवलं छन्दोरूपमाश्रित्योदक्रामत् तं प्रजापतिर्गायत्रीरूपो वयसाप्नोत् एकपदा वै विवलं छन्दः तद्विविधं वरमुत्कृष्टं पुरुषसंबन्धि हि तच्छन्दः। एवमुत्तरेष्वपि मन्त्रेषु योज्यम्। वृष्णिर्वयो विशालंछन्दः। वृष्णिं मेषं वयसा विवलं विशालं द्विपदाछन्द आप्नोति। पुरुषो वयस्तन्द्रं छन्दः। तन्द्रं छन्दः पङ्क्तिः। व्याघ्रो वयोनाधृष्टंछन्दः विराड्वा अनाधृष्टं छन्दः। सिंहो वयः छदिश् छन्दः। अति-

छन्दा वै छदिश्छन्दः । अथातो निरुक्तानिव पशून्निरुक्तानि छन्दांस्यभिदधाति पृष्ठवाड् वय इत्यादिदश निगदव्याख्याताः ॥ ९ ॥

**म०** 'वयस्याः पञ्च पञ्चानूकान्तेषु मूर्धा वय इति प्रतिमन्त्रं चतस्रः पुरस्तात्' ( का० १७ । ८ । २२ ) । दक्षिणोत्तरपश्चिमेष्वनूकान्तेषु पञ्च-पञ्च पूर्वे तु चतस्रो वयस्यासंज्ञका इष्टका उपदधात्येकोनविंशतिमन्त्रैरित्यर्थः । एकोनविंशतिर्यजूंषि लिङ्गोक्तदेवतानि । वयःशब्दोपेतमन्त्ररूपधेया इष्टकाः । अत्र श्रुत्युक्तं निदानम् । पुरा सृष्टवतः प्रजापतेर्व्याकुलात्सकाशात् सृष्टाः पशवश्छन्दोरूपमास्थाय निरगच्छन् । ततः प्रजापतिरपि गायत्र्यादिच्छन्दोरूपं स्वीकृत्य पशुसंबन्धिन्या तत्तद्वयोवस्थया तान्पशूनाप्नोत्तदभिधायका मन्त्राः । 'प्रजापतेर्विस्रस्तात्पशव उदक्रामंश्छन्दाᳪंसि भूत्वा तान्गायत्री छन्दो भूत्वा वयसाप्नोत्' ( ८ । २ । ३ । ९ ) इति श्रुतेः । तत्रादौ चतुर्भिर्मन्त्रैः प्रजापतेरष्टावयवात्मकं गायत्रीरूपं परिकल्प्यते । मूर्धा प्रधानः प्रजापतिश्छन्दो गायत्रीरूपो भूत्वा वयः । विभक्तिव्यत्ययः । वयसा कृत्वा पशूनाप्नोदिति शेषः । तद्रूपां त्वामिष्टके उपदधामीति सर्वत्र शेषः । अनेन मन्त्रेण प्रजापतेर्द्वाववयवौ कल्पितौ । 'प्रजापतिर्वै मूर्धा स वयोऽभवत्प्रजापतिश्छन्द इति प्रजापतिरेव छन्दोऽभवत्' ( ८ । २ । ३ । १० ) इति श्रुतेः । क्षतात्त्रायत इति क्षत्रं तादृशं वयः शरीरावस्था प्रजापतिरभवत् । मयं सुखं ददातीति मयन्दमनिरुक्तं छन्दोऽभवत् । क्षत्रं वय इति प्रजापतिर्वै क्षत्रᳪंस वयोऽभवन्मयन्दं छन्द इति । यद्वा 'अनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव छन्दोऽभवत्' ( ८ । २ । ३ । ११ ) इति श्रुतेः । अधिपतिः अधिकं पालकः विष्टभ्नोति जगत्स्तम्भयतीति विष्टम्भः ईदृशः प्रजापतिः वयस्तत्पशुवयोऽवस्थावान् छन्दश्चाभवत् । 'प्रजापतिर्वै विष्टम्भः स वयोऽभवदधिपतिश्छन्द इति प्रजापतिर्वा अधिपतिः प्रजापतिरेव छन्दोऽभवत्' ( ८ । २ । ३ । १२ ) इति श्रुतेः । परमे पदे तिष्ठतीति परमेष्ठी विश्वकर्मा सर्वस्रष्टा प्रजापतिर्वयश्छन्दश्चाभवत् । 'प्रजापतिर्वै विश्वकर्मा स वयोऽभवत्परमेष्ठी छन्द इत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवत्' ( ८ । २ । ३ । १३ ) इति श्रुतेः । एवं प्रतिमन्त्रं द्वौ द्वाववयवावित्यष्टावयवः प्रजापतिर्गायत्रीरूपः परिकल्पितः । तथा चाष्टसंख्योपेतत्वात्सर्वच्छन्दःप्रकृतिभूतं गायत्रीछन्दो भूत्वा वयसा । तृतीयाया लुक् । वयोऽवस्थया वक्ष्यमाणान् पञ्चदश पशून् प्रजापतिरग्रहीत् । 'तानि वा एतानि चत्वारि वयाᳪंसि चत्वारि छन्दाᳪंसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान्पशून्वयसाप्नोत्' ( ८ । २ । ३ । १४ ) इति श्रुतेः । बस्तः अजः । द्वितीयैकवचनस्य सुपां स्विति सुआदेशः । वय इति तृतीयालुक् । विवलं वरमुत्कृष्टं छन्दः एकपदाख्यं छन्दो भूत्वोत्क्रान्तं बस्तं पशुं वयसा तत्तद्वयोवस्थया जग्राह । एवमुत्तरमन्त्रेष्वपि विभक्तिविपरिणामं कृत्वा तत्तच्छन्दोरूपमास्थाय प्रजापतिस्तत्तद्वयसा तं तं पशुं गृहीतवानिति योज्यम् । विशेषस्तु वक्ष्यते । 'बस्तो वय इति बस्तं वयसाप्नोद्विवलं छन्द इत्येकपदा विवलं छन्द एकपदा ह भूत्वाजा उच्चक्रमुः' ( ८ । २ । ४ । १ ) इति श्रुतेः । विशालं द्विपदागायत्रीरूपं छन्दो भूत्वा वृष्णिं सेचनसमर्थं मेषं वयसा जग्राह । 'वृष्णिं वयसाप्नोद्विशालं छन्दः इति द्विपदा वै विशालं छन्दो द्विपदा ह भूत्वा वय उच्चक्रमुः' ( ८ । २ । ४ । २ ) इति श्रुतेः । तन्द्रं पङ्क्तिश्छन्दो भूत्वोत्क्रान्तं पुरुषं पशुं वयसाप्नोत् । 'पुरुषं वयसाप्नोत्तन्द्रं छन्द इति पङ्क्तिर्वै तन्द्रं छन्दः पङ्क्तिर्हि भूत्वा पुरुषा उच्चक्रमुः' ( ८ । २ । ४ । ३ ) इति श्रुतेः । अनाधृष्टं विराट्छन्दो भूत्वोत्क्रान्तं व्याघ्रं पशुं वयसाऽग्रहीत् 'व्याघ्रं वयसाप्नोदनाधृष्टं छन्द इति विराड्वा छन्दोऽन्नं वै विराडन्नमनाधृष्टं विराड्भूत्वा व्याघ्रा उच्च०' ( ८ । २ । ४ । ४ । ८ ) । छादयतीति छदिरतिच्छन्दाछन्दो भूत्वोत्क्रान्तं सिंहं पशुं वयसाऽग्रहीत् । 'सिᳪंहं वयसाप्नोच्छदिश्छन्द इत्यतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दाᳪंसि छादयत्यतिच्छन्दा ह भूत्वा सिᳪंहा उच्च०' इति 'अथातो निरुक्तानेव पशून्निरुक्तानि छन्दाᳪंस्युपदधाति' इति श्रुतेः स्पष्टानि छन्दांसि दशोच्यन्ते । पष्ठे पृष्ठभागे वहतीति पष्ठवाद् पञ्चवर्षः पशुः बृहती छन्दो भूत्वोत्क्रान्तं पष्ठवाहं पशुं वयसाग्रहीत् । 'पष्ठवाहं वयसाप्नोद्बृहतीच्छन्द इति बृहती ह भूत्वा पष्ठवाह उच्च०' इति । उक्षा सेचनसमर्थः पशुः । आद्यन्तावष्टाक्षरौ पादौ मध्यमो द्वादशाक्षरः सा ककुप् ककुप्छन्दो भूत्वोत्क्रान्तमुक्षाणं पशुं वयसाग्रहीत् । 'उक्षाणं वयसाप्नोत्ककुप्छन्द इति ककुब्भूत्वोक्षाण उच्च०' इति । वृषभः सेचनसमर्थोऽनड्वान् । द्वादशाक्षरत्रिपादा सतोबृहती सा भूत्वोत्क्रान्तमृषभं वयसाग्रहीत् । ऋषभं वयसाप्नोत्सतोबृहतीछन्द इति सतोबृहती भूत्वर्षभा उच्च०' इति ॥ ९ ॥

अ॒न॒ड्वान्वय॒: प॒ङ्क्तिश्छन्दो॑ धे॒नुर्वयो॒ जग॑ती॒छन्द॒स्त्र्य॑वि॒र्वय॑स्त्रि॒ष्टुप्छन्दो॒ दि॑त्य॒वाड्वयो॑ वि॒राट् छन्द॒: पञ्चा॑वि॒र्वयो॑ गाय॒त्री छन्द॑स्त्रिव॒त्सो वय॑ उ॒ष्णिक् छन्द॑स्तुर्य॒वाड्वयो॑ऽनु॒ष्टुप् छन्दो॑ लो॒कं ता इन्द्र॑म् ॥ १० ॥

[ अनड्वान् । पङ्क्तिः । धेनुः । जगती । त्र्यविरितित्रिअविः । त्रिष्टुप् । त्रिस्तुबितित्रिस्तुप् । दित्यवाडितिदित्यवाट् । विराडितिवि राट् । पञ्चाविरितिपञ्च अविः ।

गायत्री । त्रिवत्सऽइतित्रिवत्सः । उष्णिक् । तुर्य्यवाडिति तुर्य्यवाट् । अनुष्टुप् । अनुस्तुविति अनु स्तुप् ॥१०॥]

पंक्ति छन्द का स्वरूप धारण करके प्रजापति ने अनड्वाह् (=अण्डू बैल) को, तदायु होकर पुनः प्राप्त किया था। पंक्तिछन्दस्वरूपी प्रजापति के स्वरूप वाली हे वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। जगतीछन्द का स्वरूप धारण करके प्रजापति ने धेनु (=तत्काल बियाई हुई सवत्सा गाय) को तदायु होकर पुनः प्राप्त किया था। जगतीछन्द स्वरूपी प्रजापति के स्वरूप वाली हे वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। त्रिष्टुप् छन्द का स्वरूप धारण करके प्रजापति ने त्र्यवि (=त्रिवर्षीय) पशु को, त्रिवर्षीय होकर पुनः प्राप्त किया था। हे त्रिष्टुप्छन्दस्वरूपी प्रजापति के स्वरूप वाली वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। विराट् छन्द का स्वरूप धारण करके प्रजापति ने वहन-समर्थ द्विवर्षीय पशु को, द्विवर्षीय होकर पुनः प्राप्त किया था। विराटछन्द स्वरूपी प्रजापति के स्वरूप वाली हे वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। गायत्री छन्द का स्वरूप धारण करके प्रजापति ने ढाई वर्ष के पशु को, ढाई वर्ष का होकर पुनः प्राप्त किया था। गायत्रीछन्दस्वरूपी प्रजापति के स्वरूप वाली हे वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। उष्णिक् छन्द का स्वरूप धारण करके प्रजापति ने तीन वर्ष के पशु को, तीन वर्ष का होकर पुनः प्राप्त किया था। उष्णिकछन्दस्वरूपी प्रजापति के स्वरूप वाली हे वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। अनुष्टुप् छन्द का स्वरूप धारण करके प्रजापति ने चार वर्ष के पशु को, चार वर्ष का होकर पुनः प्राप्त किया था। अनुष्टुप्छन्दस्वरूपी प्रजापति के स्वरूप वाली हे वयस्या इष्टके! मैं तुम्हें इस द्वितीय चिति में धरता हूँ। (आगे 'लोकम्पृण०' मंत्र से एक लोकम्पृण ईंट, 'ता अस्य०' मंत्र से एक...... ईंट तथा 'इन्द्रमाबृ०' मंत्र से एक...... ईंट धरे) ॥ १० ॥

**म०** अनः शकटं वहतीत्यनड्वान्बलीवर्दः पङ्क्तिश्छन्दो भूलोकान्तमनड्वाहं पशुं वयसाग्रहीत्। अनड्वाहं पशुं वयसाग्रहीत्। अनड्वाहं वयसाप्रोत्पङ्क्तिश्छन्द इति पङ्क्तिर्ह भूत्वानड्वाह उच्च०' (८।२।४।९-१५) धेनुः नवप्रसूता सवत्सा गौः जगती छन्दो भूलोत्कान्ता धेनुं वयसाग्रहीत्। 'धेनुं वयसाप्रोज्जगती छन्द इति जगती ह भूत्वा धेनव उच्च०' इति। षण्मासात्मकः कालोऽविः तिस्रोऽवयोऽस्य त्र्यविः अष्टादशमासः पशुः त्रिष्टुप्छन्दो भूलोत्कान्तं त्र्यविं पशुं वयसाग्रहीत् त्र्यविं पशुं वयसाग्रहीत्। 'त्र्यविं वयसाप्रोत्त्रिष्टुप् छन्द इति त्रिष्टुब् ह भूत्वा त्र्यवय उच्च०' इति। 'दोऽवखण्डने' क्तिन्प्रत्ययः। दितिं खण्डनमर्हतीति दित्यं धान्यं वहति दित्यवाट्! यद्वा द्विवर्षः पशुर्दित्यवाट् विराट्छन्दो भूलोत्कान्तं दित्यवाहं पशुं वयसाग्रहीत्। 'दित्यवाहं वयसाप्रोद्विराट् छन्द इति विराड् भूत्वा दित्यवाह उच्च०' इति। पञ्चाविः पञ्चावयो यस्य सः सार्धद्विवर्षः पशुः गायत्री भूलोत्कान्तं पञ्चाविं पशुमग्रहीत्। 'पञ्चाविं वयसाप्रोद्गायत्री छन्द इति गायत्री ह भूत्वा पञ्चावय उच्च०' इति। त्रिवत्सः त्रयो वत्साः वत्सराः यस्य सः त्रिवत्सः पशुः उष्णिक् छन्दो भूलोत्कान्तं त्रिवत्सं जग्राह। 'त्रिवत्सं वयसाप्रोदुष्णिक् छन्द इत्युष्णिगध भूत्वा त्रिवत्सा उच्च०' इति। तुर्यवाट् तुर्यं चतुर्थं वर्षं वहतीति चतुर्वर्षः पशुः अनुष्टुप् छन्दो भूलोत्कान्तं तुर्यवाहं पशुं प्रजापतिर्वयसाग्रहीत्। 'तुर्यवाहं वयसाप्रोदनुष्टुप् छन्द इत्यनुष्टुब् ह भूत्वा तुर्यवाह उच्चक्रमुः' (८।२।४।१५) इति श्रुतेः। एवं श्रुत्यनुसारेण मन्त्रा व्याख्याताः। 'दक्षिणश्रोणेरधि लोकंपृणाः पूर्ववत्' (का० १७।८।२४)। दक्षिणश्रोणिमारभ्य लोकंपृणा उपदधाति (१२, ५४।५५।५६) पुरीषनिर्वापः सप्तर्चोपस्थानं चेति सूत्रार्थः ॥ १० ॥

इति द्वितीया चितिः संपूर्णा ॥

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम्।
पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधसे ॥ ११ ॥

[इन्द्राग्नीऽइतीन्द्राग्नी । अव्यथमानाम् । इष्टकाम् । दृꣳहतम् । युवम् ॥ पृष्ठेन । द्यावापृथिवीऽइति द्यावापृथिवी । अन्तरिक्षम् । च । वि । बाधसे ॥११॥]

(यहाँ से आगे तृतीय चिति के चयन के मंत्रों का प्रारम्भ होता है। सर्वप्रथम 'स्वयमातृण्णा' नाम की ईंट का चुनना।) हे इन्द्रअग्ने! तुम दोनों इस अचला इष्टका को तृतीय चिति में दृढ़ करो। हे स्वयमातृण्णा इष्टके! तुम अपनी पीठ पर चिति में चयन की जाकर और अपने ऊपर अन्य ईंटों का भार उठाने वाली बनकर द्यावापृथिवी तथा अन्तरिक्ष को वहन करती हो ॥ ११ ॥

**उ०** तृतीयां चितिमिन्द्राग्नी विश्वकर्मा नापश्यत्। तत्र स्वयमातृण्णा प्रथमा। इन्द्राग्नी अव्यथमानाम्। अनुष्टुप्। पूर्वोऽर्धर्च ऐन्द्राग्नः उत्तरः स्वयमातृण्णायाः। तत्रोत्तरोऽर्धर्चः पूर्वं व्याख्यायते। तत्र विबाधत इति पुरुषव्यत्ययः। येयं पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधते अभिभवति तामिन्द्राग्नी अव्यथमानां अचलन्तीमिष्टकां दृंहतं दृढीकुरुतम्। युवं युवाम् ॥ ११ ॥

**म०** अथ तृतीया चितिः। इन्द्राग्नी विश्वकर्मा च तन्मन्त्राणामृषिः। 'तृतीयायाꣳस्वयमातृण्णामिन्द्राग्नी इति मध्ये' (का० १७।८।२५)। तृतीयायां चितावात्मनो मध्ये स्वयमातृण्णामुपदधाति। अनुष्टुप् पूर्वोऽर्धर्च इन्द्राग्निदेवत्यः उत्तरः स्वयमातृण्णादेवतः। हे इन्द्राग्नी, युवं युवामव्यथमानामचलन्तीं भङ्गरहितामिष्टकां स्वयमातृण्णाख्यां दृढीकुरुतम्। एवमिन्द्राग्नी प्रत्युक्त्वा इष्टकामाह। हे स्वयमातृण्णे, पृष्ठेन स्वोपरिभागेन द्यावापृथिवी अन्तरिक्षं च त्वं विबाधसे अभिभवसि लोकत्रयमस्येषि ॥ ११ ॥

**विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीः ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥ वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ १२ ॥**

[विश्वकर्मेतिविश्व कर्म्मा । त्वा । सादयतु । अन्तरिक्षस्य । अन्तरिक्षम् । वायुः ॥१२॥]

हे स्वयमातृण्णा इष्टके ! अवकाश और विस्तार से युक्त तुम स्वयमातृण्णा ईंट को स्वयं प्रजापति ही इस तृतीय चिति के अन्दर स्थापित करे। हे इष्टके ! तुम इस तृतीय चिति का नियमन करो। तुम इस तृतीय चिति को दृढ़ बनाओ। हे इष्टके! इस हमारी तृतीय चिति को तुम खण्डित मत करना। समस्त प्राण-अपान-व्यान-उदान-समान; गृहस्थिति और यज्ञादि कर्मों के करने के लिए (तुम यहाँ इस तृतीय चिति में प्रतिष्ठित होओ)। इस तृतीय चिति में चुनी गई तुम्हें अन्तरिक्ष का देवता वायु सर्वथा सुरक्षित बनावे। वह समस्त योगक्षेम और अपने अत्यन्त शान्त तेज के साथ तुम्हें बचावे। हे इष्टके! उस वायुदेवता के द्वारा सुरक्षित तुम इस हमारी तृतीय चिति में वैसे ही स्थिरता से स्थित होओ कि जैसे तुम अंगिरा की तृतीय चिति में दृढ़ता से स्थित हुई थी ॥ १२ ॥

**उ०** विश्वकर्मा त्वा प्रजापात्तः सादयतु इत्यादि पूर्ववद्व्याख्येयम्। अन्तरिक्षस्य पृष्ठेनायुष्ट्वा इति विशेषः ॥१२॥

**म०** वायुदेवत्यं विकृतिच्छन्दस्कं यजुः स्वयमातृण्णोपधाने एव विनियुक्तम्। हे स्वयमातृण्णे, विश्वकर्मा प्रजापतिरन्तरिक्षस्य पृष्ठे उपरि त्वा त्वां सादयतु स्थापयतु। किंभूतां त्वाम्। व्यचस्वतीमभिव्यक्तियुक्ताम्। प्रथस्वतीं प्रथनं प्रथो विस्तारस्तद्युक्ताम्। हे इष्टके, त्वमन्तरिक्षं यच्छ गन्धर्वाप्सरोगणादिधारकतया नियमय। अन्तरिक्षं दृंह परोपद्रवाभावेन दृढीकुरु। तदन्तरिक्षं मा हिंसीः। किमर्थम्। विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय प्रतिष्ठायै स्वगृहस्थित्यै चरित्राय शास्त्रीयाचरणाय। प्राणिनामेतत्सर्वं लोकदार्ढ्ये सति भवतीति नभोनियमनादि प्रार्थ्यत इति भावः। किंच मह्या महत्या स्वस्त्या योगक्षेमसंपत्त्या शन्तमेनातिशुभकारिणा छर्दिषा तेजोविशेषेण च कृत्वा वायुः त्वा त्वामभिपातु सर्वतो रक्षतु। तवाधिष्ठात्री या देवता तया देवतयानुगृहीता ध्रुवा स्थिरा सती सीदोपविश। अङ्गिरस्वत् अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिता तद्वत् ॥ १२ ॥

**राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिक् ॥ १३ ॥**

[राज्ञी । असि । प्राची । दिक् । विराडिति वि राट् । दक्षिणा । सम्राडिति सम् राट् । प्रतीची । स्वराडिति स्व राट् । उदीची । अधिपत्नीत्यधि पत्नी । बृहती ॥१३॥]

(पाँच दिश्या ईंटों को धरना।) हे दिश्यासंज्ञक इष्टके! तुम राजमाना पूर्वदिशास्वरूपिणी हो। तुम तत्स्वरूपा को मैं इस तृतीय चिति में चयन करता हूँ। तुम गायत्रीरूपा हो। हे इष्टके! विशेष रूप से राजमाना तुम दक्षिण दिशा (व त्रिष्टुप् छन्द) के स्वरूप वाली हो। उस तुम तत्स्वरूपा को मैं इस तृतीय चिति में चयन करता हूँ। सम्यक् राजमाना हे इष्टके! तुम पश्चिम दिशा (=जगती छन्द) स्वरूपा हो। तुम तत्स्वरूपा को मैं इस तृतीय चिति में चुनता हूँ। हे इष्टके! स्वयं शोभमाना तुम उत्तर दिशा (अनुष्टुप् छन्द) स्वरूपा हो। तुम उस तत्स्वरूपा को मैं इस तृतीय चिति में चयन करता हूँ। हे इष्टके! तुम सभी प्रकार से पालन करनेवाली होकर ऊर्ध्वदिशा (=बृहती छन्द) स्वरूपा हो। उस तुम तत्स्वरूपा को मैं इस तृतीय चिति में चुनता हूँ ॥ १३ ॥

**उ०** शतम् ७०० पञ्च दिश्या उपदधाति। वायुरपश्यत् राज्यसीति प्रतिमन्त्रम् ॥ १३ ॥

**म०** 'अनूकेषु पञ्च दिश्या वैश्वदेवीवद्राज्यसीति प्रतिमन्त्रम्' (का० १७। ८। २६)। वैश्वदेवीवदिति प्रतिदिशं रेतःसिग्वेलायामनूकेषु पञ्च दिश्यासंज्ञका इष्टका उपदधाति पञ्चमीं दक्षिणामुत्तरेणेति सूत्रार्थः। दिक्शब्दोपेतत्वान्मन्त्राणां दिश्या इष्टकाः। दिग्देवत्यानि पञ्च यजूंषि। हे इष्टके, त्वं राज्ञी राजमाना सती प्राची दिक् पूर्वा दिग्भवसि गायत्रीरूपासि। विराट् विविधं राजमाना दक्षिणा दिक् असि। त्रिष्टुब्रूपासि। सम्राट् सम्यग्राजमाना प्रतीची दिक् जगत्यसि। स्वराट् परनिरपेक्षं स्वयमेव राजमाना सती उदीची दिगनुष्टुबसि। अधिकं पातीत्यधिपत्नी बृहती प्रौढोर्ध्वा दिक् पङ्क्तिरसि। दिक्छन्दोरूपां तां त्वां सादयामीति सर्वत्र शेषः। 'छन्दाꣳसि वै दिशो गायत्री वै प्राची दिक् त्रिष्टुब्दक्षिणा जगती प्रतीच्यनुष्टुबुदीची पङ्क्तिरूर्ध्वेति' (८। ३। १। १४) श्रुतेः ॥१३॥

**विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ॥ विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ १४ ॥**

(द्वितीय चिति में चुनी गई विश्वज्योतिष नाम की ईंट के ऊपर ही एक अन्य विश्वज्योतिष ईंट को तृतीय चिति में भी चयन करना।) हे इष्टके! तुम ज्योतिष्मती (=वायुरूपा) को स्वयं प्रजापति ही इस तृतीय चिति में विश्वज्योतिष ईंट की पीठ पर चयन करे। हे विश्वज्योतिष इष्टके! समस्त प्राण-अपान-व्यान-उदान की दृढ़ता के लिए तुम इस तृतीय चिति में दृढ़ होओ।

लोहितोर्णीतिलोहित ऊर्णी । पलक्क्षी । ताः । सारस्वत्यः । प्लीहाकर्णः । प्लीहकर्णऽइतिप्लीह कर्णः । शुण्ठाकर्णः । शुण्ठकर्णऽइतिशुण्ठ कर्णः । अद्ध्यालोहकर्णऽइत्यद्ध्यालोह कर्णः । ते । त्वाष्ट्राः । कृष्णग्रीवऽइतिकृष्ण ग्रीवः । शितिकक्षऽइतिशिति कक्षः । अञ्जिसक्थऽइत्यञ्जि सक्थः । ते । ऐन्द्राग्नाः । कृष्णाञ्जिरितिकृष्ण अञ्जिः । अल्पाञ्जिरित्यल्प अञ्जिः । महाञ्जिरितिमहा अञ्जिः । ते । उषस्याः ॥४॥ ]

विचित्र वर्ण, तिरछी धारियों और ऊपर को धारियों वाले पशु। वे मरुतदेवों के पशु हैं। अपुष्ट शरीर, रक्तरोमा व श्वेत स्त्री-पशु (=मेषी)। वे सरस्वती सम्बन्धिनी है। प्लीहारोग से युक्त कानवाला, ह्रस्वकर्ण और रक्तकर्ण पशु। वे त्वष्टा के पशु हैं। काली गर्दन, श्वेतबगल व पुण्ड्र जंघा वाले पशु। वे इन्द्र-अग्नि के पशु हैं। कृष्णपुण्ड्र, अल्पाञ्जि व महाञ्जि पशु। वे उषा सम्बन्धी पशु हैं ॥ ४ ॥

**उ०** पृश्निः विचित्रवर्णा तिरश्चीनानि पृश्नीनि बिन्दवो यस्य सः । एवमूर्ध्वानि पृश्नीनि यस्य सः । ते त्रयो मारुताः मरुद्देवत्यास्तृतीये । फल्गूः अपुष्टशरीरा लोहितोर्णी रक्तरोमवती पलक्षी श्वेता । पलक्षशब्दो वलक्षार्थः श्वेतपर्यायः । तास्तिस्रोऽजाः सारस्वत्यः सरस्वतिदैवतास्तृतीये । प्लीहाकर्णः प्लीहा रोगविशेषः तद्युक्तौ कर्णौ यस्य स प्लीहकर्णः 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । शुण्ठकर्णः ह्रस्वकर्णः अध्यालोहकर्णः रक्तवर्णकर्णः ते त्रयस्त्वाष्ट्राः त्वष्टृदैवतास्तृतीये । कृष्णग्रीवः शितिकक्षः श्वेतकक्षः अञ्जिसक्थः अञ्जि पुण्ड्रं सक्थ्नोरूर्वोर्यस्य सः ते त्रय ऐन्द्राग्नाः इन्द्राग्निदैवताः तृतीये । पञ्चदश पूर्णाः । कृष्णाञ्जिः कृष्णपुण्ड्रः अल्पाञ्जिः महाञ्जिः अल्पमञ्जि यस्य महदञ्जि यस्य तथा ते त्रय उषस्याः उषादेवताश्चतुर्थे यूपे नियोज्याः ॥ ४ ॥

**म०** पृश्निः विचित्रवर्णो तिरश्चीनानि पृश्नीनि बिन्दवो यस्य सः एवमूर्ध्वानि पृश्नीनि यस्य सः ते त्रयो मारुताः मरुद्देवत्यास्तृतीये । फल्गूः अपुष्टशरीरा लोहितोर्णी रक्तरोमवती पलक्षी श्वेता । पलक्षशब्दो वलक्षार्थः श्वेतपर्यायः । तास्तिस्रोऽजाः सारस्वत्याः सरस्वतिदैवतास्तृतीये । प्लीहाकर्णः प्लीहा रोगविशेषः तद्युक्तौ कर्णौ यस्य स प्लीहकर्णः 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति संहितायां दीर्घः । शुण्ठकर्णः ह्रस्वकर्णः अध्यालोहकर्णः रक्तवर्णकर्णः । ते त्रयस्त्वाष्ट्राः त्वष्टृदैवतास्तृतीये । कृष्णग्रीवः शितिकक्षः श्वेतकक्षः अञ्जिसक्थः अञ्जि पुण्ड्रं सक्थ्नोरूर्वोर्यस्य सः ते त्रय ऐन्द्राग्नाः इन्द्राग्निदैवताः तृतीये । पञ्चदश पूर्णाः । कृष्णाञ्जिः कृष्णपुण्ड्रः अल्पाञ्जिः महाञ्जिः अल्पमञ्जि यस्य महदञ्जि यस्य स तथा । ते त्रय उषस्या उषोदेवताश्चतुर्थे यूपे नियोज्याः ॥ ४ ॥

शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाता अदित्यै सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥ ५ ॥

[ शिल्पाः । वैश्वदेव्यऽइतिवैश्व देव्यः । रोहिण्यः । त्र्यवयऽइतित्रि अवयः । वाचे । अविज्ञाताऽइत्यविज्ञाताः । अदित्यै । सरूपाऽइतिस रूपाः । धात्रे । वत्सतर्यः । देवानाम् । पत्नीभ्यः ॥५॥ ]

विचित्र वर्ण तीन स्त्री-पशु विश्वेदेवों के हैं। डेढ़ वर्ष के तीन लाल बकरे वाक् देवता के पशु जाने गए हैं। विशेष चिह्नों से शून्य तीन पशु अदिति के लिए बाँधना चाहिए। समान वर्ण तीन पशु धाता के लिए हों। छोटी बकरियाँ देवों की पत्नियों के लिए बाँधना चाहिए ॥ ५ ॥

**उ०** विचित्रवर्णास्तिस्रः स्त्रीपशवो वैश्वदेव्यः विश्वदेवदेवताश्चतुर्थे । रोहिण्यः रक्तवर्णाः त्र्यवयः सार्धसंवत्सरास्तिस्रोऽजा वाचे वाग्देवताश्चतुर्थे । अविज्ञाताः कृष्णग्रीवादिचिह्नविज्ञानशून्यास्त्रयः पशवोऽदित्यै अदितिदेवताश्चतुर्थे । सरूपाः समानरूपास्त्रयः पशवो धात्रे धातृदेवताश्चतुर्थे । एवं पञ्चदश । अथ पञ्चमे यूपे तिस्रो वत्सतर्यः बालछाग्यो देवानां पत्नीभ्यः तद्देवताः पञ्चमे ॥ ५ ॥

**म०** विचित्रवर्णास्तिस्रः स्त्रीपशवो वैश्वदेव्यः विश्वदेवदेवताश्चतुर्थे । रोहिण्यः रक्तवर्णाः त्र्यवयः सार्धसंवत्सरास्तिस्रोऽजा वाचे वाग्देवताश्चतुर्थे । अविज्ञाताः कृष्णग्रीवादिचिह्नविज्ञानशून्यास्त्रयः पशवोऽदित्यै अदितिदेवताश्चतुर्थे । सरूपाः समानरूपास्त्रयः पशवो धात्रे धातृदेवताश्चतुर्थे एवं पञ्चदश । अथ पञ्चमे यूपे तिस्रो वत्सतर्यः बालछाग्यो देवानां पत्नीभ्यः तद्देवताः पञ्चमे ॥ ५ ॥

कृष्णग्रीवा आग्नेयाः शितिभ्रवो वसूनाꣳ रोहिता रुद्राणाꣳ श्वेता अवरोकिण आदित्यानां नभोरूपाः पार्जन्याः ॥ ६ ॥

[ कृष्णग्रीवाऽइतिकृष्ण ग्रीवाः । आग्नेयाः । शितिभ्रवऽइतिशिति भ्रवः । वसूनाम् । रोहिताः । रुद्राणाम् । श्वेताः । अवरोकिणऽइत्यव रोकिणः । आदित्यानाम् । नभोरूपाऽइतिनभः रूपाः । पार्जन्याः ॥६॥ ]

काली गर्दन वाले तीन पशु अग्नि सम्बन्धी हैं। श्वभ्रू तीन पशु वसुओं के हैं। लाल वर्ण के तीन पशु रुद्रों के हैं। श्वेत व अधोछिद्र तीन पशु आदित्यों के हैं। नभोरूप तीन पशु पर्जन्य सम्बन्धी हैं ॥ ६ ॥

**उ०** कृष्णग्रीवाः कालकण्ठास्त्रयः पशव आग्नेयाः अग्नि-

देवताः पञ्चमे। शितिभ्रवः श्वेतवर्णभ्रूयुक्तास्त्रयो वसूनां वसुदेवताः पञ्चमे । रोहिताः रक्तवर्णास्त्रयः रुद्राणां रुद्रदेवताः पञ्चमे। श्वेताः अवरोकिणः अवलोकिनः। यद्वा अवाधस्ताद्रोकः छिद्रं येषां ते । 'छिद्रं निर्व्यथनं रोकः' । ते त्रयः आदित्यानां तद्देवताः पञ्चमे । अथ षष्ठे यूपे। नभोरूपाः पार्जन्यास्त्रयः षष्ठे ॥ ६ ॥

**म०** कृष्णग्रीवाः कालकण्ठास्त्रयः पशव आग्नेयाः अग्निदेवताः पञ्चमे । शितिभ्रवः श्वेतवर्णभ्रूयुक्तास्त्रयो वसूनां वसुदेवताः पञ्चमे । रोहिताः रक्तवर्णास्त्रयः रुद्रदेवताः पञ्चमे। श्वेताः अवरोकिणः अवलोकिनः। यद्वा अवाधस्ताद्रोकः छिद्रं येषां ते 'छिद्रं निर्व्यथनं रोकः' इति कोशः। ते त्रयः आदित्यानां तद्देवताः पञ्चमे। अथ षष्ठे यूपे। नभोरूपाः पार्जन्यास्त्रयः षष्ठे ॥ ६ ॥

उन्नत ऋषभो वामनस्त ऐन्द्रावैष्णवा उन्नतः शितिबाहुः शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः शुकरूपा वाजिनाः कल्माषा आग्निमारुताः श्यामाः पौष्णाः ॥ ७ ॥

[ उन्नत इत्युत् नतः । ऋषभः । वामनः । ते । ऐन्द्रावैष्णवाः । उन्नत इत्युत् नतः । शितिबाहुरिति शिति बाहुः । शितिपृष्ठ इति शिति पृष्ठः । ते । ऐन्द्राबार्हस्पत्याः । शुकरूपा इति शुक रूपाः । वाजिनाः । कल्माषाः । आग्निमारुता इत्याग्नि मारुताः । श्यामाः । पौष्णाः ॥७॥ ]

पूर्णायु होकर भी वामन तीन पशु इन्द्र-विष्णु के सम्बन्धी होते हैं। पूर्ण श्वेतबाहु और श्वेतपृष्ठ पशु। वे इन्द्र-बृहस्पति सम्बन्धी हैं। तोतावर्ण तीन पशु अश्व सम्बन्धी हैं। मटमैले वर्ण के तीन पशु अग्नि-मरुत् सम्बन्धी हैं। श्याम वर्ण के तीन पशु पूषादेव सम्बन्धी हैं ॥ ७ ॥

**उ०** उन्नतः उच्चः ऋषभः पुष्टः वामनः बहुन्यपि वयसि गते वृद्धिरहितः ते त्रय ऐन्द्रावैष्णवाः इन्द्रविष्णुदेवताः षष्ठे। उन्नतः शितिबाहुः श्वेतपूर्वपादः शितिपृष्ठः श्वेतपृष्ठः ते त्रयः ऐन्द्राबार्हस्पत्याः इन्द्रबृहस्पतिदेवताः षष्ठे। शुकरूपाः शुकपक्षिसमवर्णाः त्रयो वाजिनाः वाजिदेवताः षष्ठे । एवं कल्माषाः कर्बुरास्त्रयः पशव आग्निमारुताः षष्ठे । एवं पञ्चदश। अथ सप्तमे यूपे। श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवताः सप्तमे ॥ ७ ॥

**म०** उन्नतः उच्चः ऋषभः पुष्टः वामनः बहुन्यपि वयसि गते वृद्धिरहितः ते त्रय ऐन्द्रावैष्णवाः इन्द्रविष्णुदेवताः षष्ठे। उन्नतः शितिबाहुः श्वेतपूर्वपादः शितिपृष्ठः श्वेतपृष्ठः ते त्रयः ऐन्द्राबार्हस्पत्याः इन्द्रबृहस्पतिदेवताः षष्ठे। शुकरूपाः शुकपक्षिसमवर्णाः त्रयो वाजिनाः वाजिदेवताः षष्ठे । कल्माषाः कर्बुरास्त्रयः पशव आग्निमारुताः षष्ठे । एवं पञ्चदश । अथ सप्तमे यूपे । श्यामाः कृष्णवर्णाः पौष्णाः पूषदेवताः सप्तमे ॥ ७ ॥

एता ऐन्द्राग्ना द्विरूपा अग्नीषोमीया वामना अनड्वाह आग्नावैष्णवा वशा मैत्रावरुण्योऽन्यत एन्यो मैत्र्यः ॥ ८ ॥

[ एताः । ऐन्द्राग्नाः । द्विरूपा इति द्वि रूपाः । अग्नीषोमीयाः । वामनाः । अनड्वाहः । आग्नावैष्णवाः । वशाः । मैत्रावरुण्यः । अन्यतएन्य इत्यन्यतः एन्यः । मैत्र्यः ॥८॥ ]

मटमैले वर्ण के तीन पशु इन्द्र-अग्नि सम्बन्धी हैं। दो रंग के तीन पशु अग्नि-सोम सम्बन्धी हैं। तीन बौने बैल अग्नि-विष्णु सम्बन्धी हैं। तीन वन्ध्या बकरियाँ मित्र-वरुण सम्बन्धी हैं। मटमैली तीन बकरियाँ मित्रदेवता सम्बन्धी पृथक् भी बाँधनी चाहिए ॥ ८ ॥

**उ०** एताः कर्बुरवर्णास्त्रय इन्द्राग्निदेवताः सप्तमे । द्विरूपाः वर्णद्वयोपेतास्त्रयः अग्नीषोमीयाः अग्निसोमदेवत्याः सप्तमे। वामना अनड्वाहः त्रय आग्नावैष्णवाः अग्निविष्णुदेवत्याः सप्तमे । वशाः वन्ध्याः तिस्रोऽजाः मैत्रावरुण्यः तद्देवताः सप्तमे। अथाष्टमे यूपे । अन्यत एन्यः एकपार्श्वे कर्बुरवर्णास्तिस्रोऽजा मैत्र्याः मित्रदेवत्याः अष्टमे ॥ ८ ॥

**म०** एताः कर्बुरवर्णास्त्रय इन्द्राग्निदेवताः सप्तमे। द्विरूपाः वर्णद्वयोपेतास्त्रयः अग्नीषोमीयाः अग्निसोमदेवत्याः सप्तमे। वामना अनड्वाहः त्रय आग्नावैष्णवाः अग्निविष्णुदेवत्याः सप्तमे। वशाः वन्ध्याः तिस्रोऽजाः मैत्रावरुण्यः तद्देवताः सप्तमे । अथाष्टमे यूपे । अन्यत एन्यः एकपार्श्वे कर्बुरवर्णास्तिस्रोऽजा मैत्र्यः मित्रदेवत्याः अष्टमे ॥ ८ ॥

कृष्णग्रीवा आग्नेया बभ्रवः सौम्याः श्वेता वायव्या अविज्ञाता अदित्यै सरूपा धात्रे वत्सतर्यो देवानां पत्नीभ्यः ॥ ९ ॥

[ बभ्रवः । सौम्याः । श्वेताः । वायव्याः ॥९॥ ]

काली गर्दन वाले तीन पशु अग्नि सम्बन्धी हैं। पीले तीन पशु सोम सम्बन्धी हैं। श्वेत वर्ण तीन पशु वायुदेवताक हैं। चिह्न रहित तीन पशु अदिति के लिए बाँधना। समानवर्ण तीन पशु धाता के लिए बाँधना। तीन छोटी बकरियाँ देव-पत्नियों के लिए बाँधना चाहिए ॥ ९ ॥

**उ०** कृष्णग्रीवा आग्नेयास्त्रयः अष्टमे । बभ्रवः कपिल-

वर्णास्त्रयः सौम्याः सोमदेवत्याः अष्टमे । श्वेतास्त्रयः वायव्याः वायुदेवत्याः अष्टमे । अविज्ञाताः चिह्नविशेषेणाज्ञातास्त्रयः अदितिदेवत्या अष्टमे । अथ नवमे सरूपाः धातृदेवत्याः नवमे । वत्सतर्यः देवपत्नीदेवत्यास्तिस्रः नवमे ॥ ९ ॥

**म०** कृष्णग्रीवा आग्नेयास्त्रयः अष्टमे । बभ्रवः कपिलवर्णास्त्रयः सौम्याः सोमदेवत्याः अष्टमे । श्वेतास्त्रयः वायव्याः वायुदेवत्याः अष्टमे । अविज्ञाताः चिह्नविशेषेणाज्ञातास्त्रयः अदितिदेवत्याः अष्टमे । अथ नवमे । सरूपाः धातृदेवत्याः नवमे । वत्सतर्यः देवपत्नीदेवत्यास्तिस्रः नवमे ॥ ९ ॥

## कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्याः शबला वैद्युताः सिध्मास्तारकाः ॥ १० ॥

[ कृष्णाः । भौमाः । धूम्राः । आन्तरिक्षाः । बृहन्तः । दिव्याः । शबलाः । वैद्युताः । सिध्माः । तारकाः ॥१०॥ ]

काले तीन पशु भूमिदेवताक हैं। धूम्र वर्ण तीन पशु अन्तरिक्षदेवताक हैं। बड़े तीन पशु द्युदेवताक हैं। विविधवर्ण तीन पशु विद्युद्देवताक हैं। सिध्मरोगी तीन पशु नक्षत्रदेवताक हैं ॥ १० ॥

**उ०** कृष्णाः भौमाः भूमिदेवत्यास्त्रयः नवमे । धूम्रवर्णास्त्रयः अन्तरिक्षदेवत्याः नवमे । बृहन्तो महान्तस्त्रयः दिव्याः द्युदेवत्याः नवमे । अथ दशमे शबलाः कर्बुरास्त्रयः वैद्युताः विद्युद्देवत्याः दशमे । सिध्माः सिध्माख्यरोगवन्तस्त्रयः तारकाः नक्षत्रदेवत्याः दशमे ॥ १० ॥

**म०** कृष्णाः भौमाः भूमिदेवत्यास्त्रयः नवमे । धूम्रवर्णास्त्रयः अन्तरिक्षदेवत्याः नवमे । बृहन्तो महान्तस्त्रयः दिव्याः द्युदेवत्याः नवमे । अथ दशमे शबलाः कर्बुरास्त्रयः वैद्युताः विद्युद्देवत्याः दशमे । सिध्माः सिध्माख्यरोगवन्तस्त्रयः नक्षत्रदेवत्याः दशमे ॥ १० ॥

## धूम्रान्वसन्तायालभते श्वेतान् ग्रीष्माय कृष्णान्वर्षाभ्योऽरुणाञ्छरदे पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥ ११ ॥

[ धूम्रान् । वसन्ताय । आ । लभते । श्वेतान् । ग्रीष्माय । कृष्णान् । वर्षाभ्यः । अरुणान् । शरदे । पृषतः । हेमन्ताय । पिशङ्गान् । शिशिराय ॥११॥ ]

धूम्रवर्ण तीन बकरों को वसन्त के लिए आलम्भन ( हनन ) करते हैं। श्वेत तीन बकरों को ग्रीष्म के लिए, काले तीन बकरों को वर्षा के लिए, रक्तवर्ण तीन बकरों को शरद् के लिए, बिन्दुयुक्त तीन बकरों को हेमन्त के लिए और पीले तीन बकरों को शिशिर ऋतु के लिए आलम्भन करते हैं ॥ ११ ॥

**उ०** धूम्रवर्णान् त्रीनजान् वसन्ताय वसन्तदेवतानालभते नियुनक्ति दशमे । श्वेतांस्त्रीन् ग्रीष्माय दशमे । कृष्णवर्णान् त्रीन् वर्षाभ्यः दशमे । अथैकादशे अरुणान् रक्तांस्त्रीन् शरदे एकादशे । पृषतः नानावर्णबिन्दुयुक्तान् त्रीन् हेमन्ताय एकादशे । पिशङ्गान् लोहितमिश्रकपिलवर्णांस्त्रीन् शिशिराय एकादशे ॥ ११ ॥

**म०** धूम्रवर्णान् त्रीनजान् वसन्ताय वसन्तदेवतानालभते नियुनक्ति दशमे । श्वेतान् त्रीन् ग्रीष्माय दशमे । कृष्णवर्णान् त्रीन्वर्षाभ्यः दशमे । अथैकादशे अरुणान् रक्तान् त्रीन् शरदे एकादशे । पृषतः नानावर्णबिन्दुयुक्तान् त्रीन् हेमन्ताय एकादशे । पिशङ्गान् लोहितमिश्रकपिलवर्णान् त्रीन् शिशिराय एकादशे ॥ ११ ॥

## त्र्यवयो गायत्र्यै पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै त्रिवत्सा अनुष्टुभे तुर्यवाह उष्णिहे ॥ १२ ॥

[ त्र्यवयऽइतित्रि अवयः । गायत्र्यै । पञ्चावयऽइतिपञ्च अवयः । त्रिष्टुभे । त्रिस्तुभऽइतित्रि स्तुभे । दित्यवाहुऽइतिदित्य वाहः । जगत्यै । त्रिवत्साऽइतित्रि वत्साः । अनुष्टुभे । अनुस्तुभऽइत्यनु स्तुभे । तुर्यवाहुऽइतितुर्य वाहः । उष्णिहे ॥१२॥ ]

डेढ़ वर्ष के तीन गायत्री देवता के लिए, ढाई वर्ष के तीन त्रिष्टुप् के लिए, द्विवर्षीय तीन जगती के लिए, तीन वर्ष के तीन अनुष्टुप् के लिए और साढ़े तीन वर्ष के तीन उष्णिक् छन्द के लिए आलम्भन करना चाहिए ॥ १२ ॥

**उ०** सार्धसंवत्सरास्त्रयः गायत्र्यै एकादशे । सार्धद्विसंवत्सरास्त्रयः त्रिष्टुभे एकादशे । अथ द्वादशे यूपे । दित्यवाहः । द्विसंवत्सरास्त्रयो जगत्यै द्वा० । त्रिवत्साः त्रिवर्षास्त्रयोऽनुष्टुभे द्वा० । तुर्यवाहः सार्धत्रिसंवत्सरास्त्रय उष्णिहे द्वा० ॥ १२ ॥

**म०** सार्धसंवत्सरास्त्रयः गायत्र्यै एकादशे । सार्धद्विसंवत्सरास्त्रयः त्रिष्टुभे एकादशे । अथ द्वादशे यूपे । दित्यवाहः द्विसंवत्सरास्त्रयो जगत्यै द्वा० । त्रिवत्साः त्रिवर्षाः त्रयोऽनुष्टुभे द्वा० । तुर्यवाहः सार्धत्रिसंवत्सरास्त्रय उष्णिहे द्वा० ॥ १२ ॥

## पष्ठवाहो विराज उक्षाणो बृहत्या ऋषभाः ककुभेऽनड्वाहः पङ्क्त्यै धेनवोऽतिच्छन्दसे ॥ १३ ॥

[ पष्ठवाहुऽइतिपष्ठ वाहः । विराजऽइतिवि राजे । उक्षाणः । बृहत्यै । ऋषभाः । ककुभे । अनड्वाहः । पङ्क्त्यै । धेनवः । अतिच्छन्दसऽइत्यति छन्दसे ॥१३॥ ]

चार वर्ष के तीन विराट् छन्द के लिए, तीन बैल बृहती के लिए, तीन ऋषभ ककुप् छन्द के लिए, तीन बैल पंक्ति छन्द

के लिए और तीन गाएँ अति छन्दों के लिए आलम्भन करना चाहिए ॥ १३ ॥

**उ०** पष्ठवाहः चतुःसंवत्सरास्त्रयो विराजे द्वा० । उक्षाणः सेचनसमर्था युवानस्त्रयः बृहत्यै द्वा० । अथ त्रयोदशे यूपे । ऋषभाः उक्ष्णोऽप्यधिकवयस्काः त्रयः ककुभे त्रयोदशे । अनड्वाहः शकटवहनसमर्था अजास्त्रयः पङ्क्त्यै त्रयो० । धेनवः नवप्रसूता अजास्तिस्रः अतिच्छन्दसे त्रयो० ॥ १३ ॥

**म०** पष्ठवाहः चतुःसंवत्सरास्त्रयो विराजे द्वा० । उक्षाणः सेचनसमर्था युवानस्त्रयः बृहत्यै द्वा० । अथ त्रयोदशे यूपे ऋषभाः उक्ष्णोऽप्यधिकवयस्काः त्रयः ककुभे त्रयोदशे । अनड्वाहः शकटवहनसमर्था अजास्त्रयः पङ्क्त्यै त्रयो० । धेनवः नवप्रसूता अजास्तिस्रः अतिच्छन्दसे त्रयो० ॥ १३ ॥

कृष्णग्रीवा आग्नेया बभ्रवः सोम्या उपध्वस्ताः सावित्रा वत्सतर्यः सारस्वत्यः श्यामाः पौष्णाः पृश्नयो मारुता बहुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥ १४ ॥

[ उपध्वस्ताऽइत्युप ध्वस्ताः । सावित्राः । वत्सतर्य्यः । सारस्वत्यः । श्यामाः । पौष्णाः । पृश्नयः । मारुताः । बहुरूपाऽइतिबहु रूपाः । वैश्वदेवाऽइतिवैश्व देवाः । वशाः । द्यावापृथिवीयाः ॥१४॥ ]

काली ग्रीवावाले तीन पशु अग्निदेवताक हैं। बभ्रुवर्ण तीन पशु सोमदेवताक हैं। ध्वस्तवर्ण तीन पशु सवितृदेवताक हैं। तीन वत्सतरियाँ सरस्वतीदेवताक हैं। कृष्णवर्ण तीन पशु पूषादेवताक हैं। पृश्निवर्ण तीन पशु मरुतदेवताक हैं। अनेक रूप तीन पशु विश्वेदेव-देवताक हैं। तीन वन्ध्या गाएँ द्यावापृथिवीदेवताक हैं ॥ १४ ॥

**उ०** अथ चातुर्मास्यदेवाः पशवः श्वेताः सौर्या इत्यन्ताः । तत्र प्रथमं वैश्वदेवपर्वपशव उच्यन्ते । कृष्णग्रीवाः त्रयः आग्नेयाः त्रयः बभ्रवः कपिलास्त्रयः सौम्याः । अथ चतुर्दशे यूपे । उपध्वस्ताः उपध्वंसनमधःपतनं तद्गुणविशिष्टा वर्णान्तरमिश्रिता वा त्रयः सवितृदेवताः चतु० । वत्सतर्यः तिस्रः सरस्वतीदेवताः चतु० । श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवत्याः चतु० । पृश्नयः तनुकाया विचित्रवर्णा वा त्रयो मरुद्देवताः चतु० । बहुरूपास्त्रयो वैश्वदेवाः चतु० । अथ पञ्चदशे । वशाः वन्ध्यास्तिस्रो द्यावापृथिवीयाः द्यावापृथिवीदेवत्याः पञ्च० ॥ १४ ॥

**म०** अथ चातुर्मास्यदेवाः पशवः श्वेताः सौर्या इत्यन्ताः । तत्र प्रथमं वैश्वदेवपर्वपशव उच्यन्ते । कृष्णग्रीवाः त्रयः आग्नेयाः त्रयो० । बभ्रवः कपिलास्त्रयः सौम्याः । अथ चतुर्दशे यूपे । उपध्वस्ताः उपध्वंसनमधःपतनं तद्गुणविशिष्टा वर्णान्तरमिश्रिता वा त्रयः सवितृदेवताः चतु० । वत्सतर्यः तिस्रः सरस्वतीदेवताः चतु० । श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवत्याः चतु० । पृश्नयः तनुकाया विचित्रवर्णा वा त्रयो मरुद्देवताः चतु० । बहुरूपास्त्रयो वैश्वदेवाः चतु० । अथ पञ्चदशे । वशाः वन्ध्यास्तिस्रो द्यावापृथिवीयाः द्यावापृथिवीदेवत्याः पञ्च० ॥ १४ ॥

उक्ताः संचरा एता ऐन्द्राग्नाः कृष्णा वारुणाः पृश्नयो मारुताः कायास्तूपराः ॥ १५ ॥

[ उक्ताः । सञ्चराऽइतिसम् चराः । एताः । ऐन्द्राग्नाः । कृष्णाः । वारुणाः । पृश्नयः । मारुताः । कायाः । तूपराः ॥१५॥ ]

वरुणप्रघास पर्व के पन्द्रह पशु पूर्व मंत्र में कह दिये गये। कर्बुर तीन पशु इन्द्र-अग्निदेवताक हैं। कृष्णवर्ण तीन पशु वरुणदेवताक हैं। धारीयुक्त तीन पशु मरुतदेवताक हैं और शृंगरहित तीन पशु प्रजापतिदेवताक हैं ॥ १५ ॥

**उ०** अथ वरुणप्रघासपर्वपशव उच्यन्ते । संचरशब्देन कृष्णग्रीवा आग्नेया इत्यादयः पूर्वकण्डिकोक्ताः पञ्चदश पशव उच्यन्ते । पञ्च संचराणि हवींषि भवन्तीतिवत् यथा चातुर्मास्येषु चतुर्ष्वपि पर्वसु आग्नेयादीनि पञ्च हवींषि समानानि एवमत्रापि चतुर्णां पर्वणां संबन्धिनामाद्यानां पञ्चानां देवानामाद्या एते पञ्चदश पशवः समाना एव भवन्ति । तेन संचरा उक्ताः । आग्नेयादयः पञ्चदश पशव उक्ता इत्यर्थः । आग्नेयाः कृष्णग्रीवास्त्रयः पञ्चदशे । सौम्याः बभ्रवस्त्रयः पञ्च० । सावित्रा उपध्वस्ताः त्रयः पञ्च० । सारस्वत्यः वत्सतर्यः तिस्रः पञ्च० । अथ षोडशे । पौष्णाः श्यामाः त्रयः षोडशे । एते संचरा उक्ताः । एताः कर्बुरास्त्रय ऐन्द्राग्नाः इन्द्राग्निदेवताः षो० । कृष्णाः कृष्णवर्णास्त्रयो वारुणाः वरुणदेवताः षो० । पृश्नयः तनुशरीरास्त्रयः मारुताः षो० । त्रयः तूपराः निःशृङ्गाः कायाः कदेवताः षो० ॥ १५ ॥

**म०** अथ वरुणप्रघासपर्वपशव उच्यन्ते । संचरशब्देन कृष्णग्रीवा आग्नेया इत्यादयः पूर्वकण्डिकोक्ताः पञ्चदश पशव उच्यन्ते । पञ्च संचराणि हवींषि भवन्तीतिवत् । यथा चातुर्मास्येषु चतुर्ष्वपि पर्वसु आग्नेयादीनि पञ्च हवींषि समानानि एवमत्रापि चतुर्णां पर्वणां संबन्धिनाम् आद्यानां पञ्चानां देवानामाद्या एते पञ्चदश पशवः समाना एव भवन्ति । तेन संचरा उक्ताः । आग्नेयादयः पञ्चदश पशव उक्ता इत्यर्थः । आग्नेयाः कृष्णग्रीवास्त्रयः पञ्चदशे । सौम्याः बभ्रवस्त्रयः पञ्च० । सावित्रा उपध्वस्ताः त्रयः पञ्च० । सारस्वत्यः वत्सतर्यः तिस्रः पञ्च० । अथ षोडशे । पौष्णाः श्यामाः त्रयः षोडशे । एते संचरा उक्ताः । एताः कर्बुरास्त्रय ऐन्द्राग्ना इन्द्राग्निदेवताः षो० ।

कृष्णाः कृष्णवर्णास्त्रयो वारुणाः वरुणदेवताः षो० । पृश्नयः तनुशरीरास्त्रयः मारुताः षो० । त्रयः तूपराः निःश्रृङ्गाः कायाः कदेवताः षो० ॥ १५ ॥

अग्नयेऽनीकवते प्रथमजानालभते मरुद्भ्यः सान्तपनेभ्यः सवात्यान्मरुद्भ्यो गृहमेधिभ्यो बष्किहान्मरुद्भ्यः क्रीडिभ्यः सꣳसृष्टान्मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् ॥ १६ ॥

[ अग्नये । अनीकवतऽइत्यनीक वते । प्रथमजानितिप्रथम जान् । आ । लभते । मरुद्भ्यऽइतिमरुत् भ्यः । सान्तपनेभ्यऽइतिसाम् तपनेभ्यः । सवात्यानितिस वात्यान् । गृहमेधिभ्यऽइतिगृहमेधि भ्यः । बष्किहान् । क्रीडिभ्यऽइतिक्रीडि भ्यः । सꣳसृष्टानितिसम् सृष्टान् । स्वतवद्भ्यऽइतिस्वतवत् भ्यः । अनुसृष्टानित्यनु सृष्टान् ॥१६॥ ]

( शाकमेध पशुओं का कथन ) प्रथम गर्भोत्पन्न तीन पशुओं को सेनावान् अग्नि के लिए आलम्भन करे। तीन वात्या पशुओं को सान्तपन मरुतों के लिए, गृहमेधी मरुतों के लिए तीन तत्काल उत्पन्न पशु, क्रीडी मरुतों के लिए तीन संकल्पित पशु तथा स्वतवान् मरुतों के लिए तीन छुट्टा पशुओं को आलम्भन करे ॥ १६ ॥

उ० अथ सप्तदशे । अथ साकमेधपशवः । प्रथमगर्भे जातान् त्रीन् अजान् अनीकवते अनीकवद्गुणविशिष्टायाग्नये । आलभते नियुनक्ति सप्त० । वातसमूहो वात्या तया सह वर्तन्त इति सवात्याः वातमण्डलीमध्यस्थान् त्रीनजान् सांतपनेभ्यः मरुद्भ्यः सप्त० । बष्किहान् चिरप्रसूतान्त्रीन्गृहमेधिभ्यो मरुद्भ्यः सप्त० । संसृष्टान् सह सृष्टान् त्रीन् क्रीडिभ्यो मरुद्भ्यः सप्त० । अनुसृष्टान् अनुक्रमेण जातान् त्रीन् स्वतवद्भ्यो मरुद्भ्यः सप्त० ॥ १६ ॥

म० अथ सप्तदशे । अथ साकमेधपशवः । प्रथमजान् मात्रा प्रथमगर्भे जातान् त्रीन् अजान् अनीकवते अनीकवद्गुणविशिष्टायाग्नये आलभते नियुनक्ति सप्त० । वातसमूहो वात्या तया सह वर्तन्त इति सवात्याः वातमण्डलीमध्यस्थांस्त्रीनजान् सान्तपनेभ्यः मरुद्भ्यः सप्त० । बष्किहान् चिरप्रसूतान् त्रीन् गृहमेधिभ्यो मरुद्भ्यः सप्त० । संसृष्टान् सह सृष्टान् त्रीन् क्रीडिभ्यः मरुद्भ्यः सप्त० । अनुसृष्टान् अनुक्रमेण जातान् त्रीन् स्वतवद्भ्यो मरुद्भ्यः सप्त० ॥ १६ ॥

उक्ताः संचरा एता ऐन्द्राग्नाः प्राशृङ्गा माहेन्द्रा बहुरूपा वैश्वकर्मणाः ॥ १७ ॥

[ प्राशृङ्गाः । प्रशृङ्गाऽइतिप्र शृङ्गाः । माहेन्द्राऽइतिमाहा इन्द्राः । बहुरूपाऽइतिबहु रूपाः । वैश्वकर्मणाऽइतिवैश्व कर्म्मणाः ॥१७॥ ]

अट्ठारहवें यूप के लिए महाहविः संज्ञक पन्द्रह पशु पहले कहे जा चुके हैं। उन्नीसवें यूप के लिए तीन कर्बुरवर्ण पशु इन्द्र-अग्निदेवताक, बड़ी-बड़ी सींगो वाले तीन पशु महेन्द्रदेवताक तथा अनेक वर्ण तीन पशु विश्वकर्मदेवता सम्बन्धी बाँधे जाते हैं ॥ १७ ॥

उ० अथाष्टादशे यूपे महाहविःपशवः कृष्णग्रीवादयः पञ्चदश पूर्ववत् । अथैकोनविंशतितमे एताः कर्बुरास्त्रय ऐन्द्राग्नाः एकोन० । प्राशृङ्गाः संहितायां दीर्घः । प्रकृष्टशृङ्गयुक्ता माहेन्द्राः महेन्द्रदेवता एकोन० । बहुरूपास्त्रयो वैश्वकर्मणाः विश्वकर्मदेवताः एकोन० ॥ १७ ॥

म० अथाष्टादशे यूपे महाहविःपशवः कृष्णग्रीवादयः पञ्चदश पूर्ववत् । अथैकोनविंशतितमे एताः कर्बुरास्त्रय ऐन्द्राग्नाः एकोन० । प्राशृङ्गाः संहितायां दीर्घः । प्रकृष्टशृङ्गयुक्ता माहेन्द्राः महेन्द्रदेवताः एकोन० । बहुरूपास्त्रयो वैश्वकर्मणाः विश्वकर्मदेवताः एकोन० ॥ १७ ॥

धूम्रा बभ्रुनीकाशा पितृणाꣳ सोमवतां बभ्रवो धूम्रनीकाशाः पितृणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितृणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः ॥ १८ ॥

[ धूम्राः । बभ्रुनीकाशाः । बभ्रुनिकाशाऽइतिबभ्रु निकाशाः । पितृणाम् । सोमवतामितिसोम वताम् । बभ्रवः । धूम्रनीकाशाः । धूम्रनिकाशाऽइतिधूम्र निकाशाः । पितृणाम् । बर्हिषदाम् । बर्हिसदामितिबर्हि सदाम् । कृष्णाः । बभ्रुनीकाशाः । बभ्रुनिकाशाऽइतिबभ्रु निकाशाः । पितृणाम् । अग्निष्वात्तानाम् । अग्निस्वात्तानामित्यग्नि स्वात्तानाम् । कृष्णाः । पृषन्तः । त्रैयम्बकाः ॥१८॥ ]

( पितृ इष्टिदेवता पशुओं का कथन )। धूमिल ललखट तीन पशु सोमपायी पितरों के लिए; पीले धूमिल तीन पशु बर्हिषद् पितरों के लिए; काले ललखट तीन पशु अग्निष्वात्त पितरों के लिए और तीन काले धब्बों वाले पशु त्र्यम्बकदेवताक बीसवें यूप में बाँधना चाहिए ॥ १८ ॥

उ० अथ पित्र्येष्टिदेवतापशवः धूम्राः कृष्णवर्णमिश्रा लोहितवर्णाः बभ्रुनीकाशाः कपिलवर्णसदृशास्त्रयः पशवः सोमवतां पितृणां नियोज्याः एकोन० । बभ्रवः कपिलाः धूम्रनीकाशाः धूम्रा इव नितरां काशन्ते इति तादृशास्त्रयः बर्हिषदां पितृणामेकोन० । अथ विंशे । यूपे कृष्णाः बभ्रु-

नीकाशाः अग्निष्वात्तानां पितॄणां विंशे । कृष्णाः पृषन्तः बिन्दुयुक्ताः त्र्यम्बकदेवताः विंशे ॥ १८ ॥

**म०** अथ पित्र्यैष्टिदेवतापशवः । धूम्राः कृष्णवर्णमिश्रा लोहितवर्णाः बभ्रुनीकाशाः कपिलवर्णसदृशास्त्रयः पशवः सोमवतां पितॄणां नियोज्याः एकोन० । बभ्रवः कपिलाः धूम्रनीकाशाः धूम्रा इव नितरां काशन्ते इति तादृशास्त्रयः बर्हिषदां पितॄणामेकोन० । अथ विंशे यूपे । कृष्णा बभ्रुनीकाशाः अग्निष्वात्तानां पितॄणां विंशे । कृष्णाः पृषन्तः बिन्दुयुक्ताः त्रैयम्बकाः त्र्यम्बकदेवताः विंशे ॥ १८ ॥

उक्ताः सँचरा एताः शुनासीरीयाः श्वेता वायव्याः श्वेताः सौर्याः ॥ १९ ॥

[ शुनासीरीयाऽइति । श्वेताः । वायव्याः । श्वेताः । सौर्याः ॥१९॥ ]

(शुनःसीरीय पशुओं का कथन) आग्नेय प्रभृति पन्द्रह पशु कहे जा चुके हैं। कर्बुरवर्ण तीन पशु शुनासीरीय है। श्वेत तीन पशु वायुदेवताक हैं और श्वेत ही तीन पशु सूर्यदेवताक हैं ॥ १९ ॥

**उ०** अथ शुनासीरीयपशवः । तत्र संचराः आग्नेयादयः पञ्चदशोक्ताः । तेन कृष्णग्रीवा आग्नेयाः विंशे । बभ्रवः सौम्याः विंशे । उपध्वस्ताः सावित्राः विंशे । अथैकविंशे यूपे वत्सतर्यः सारस्वत्यः एकविंशे । श्यामाः पौष्णाः एक० । एताः कर्बुराः शुनासीरीयाः शुनासीरदेवताः एक० । एवं श्वेताः त्रयो वायव्याः वायुदेवत्याः एक० । श्वेताः त्रयः सौर्याः सूर्यदेवताः एक० । एवं समाप्ताः यूपाः । इत्यश्वाद्याः सौर्यान्ताः सप्तविंशत्यधिकशतत्रयं ग्राम्याः पशवः सर्वे उक्ताः ॥ १९ ॥

**म०** अथ शुनासीरीयपशवः । तत्र संचराः आग्नेयादयः पञ्चदशोक्ताः तेन कृष्णग्रीया आग्नेयाः विंशे । बभ्रवः सौम्याः विंशे । उपध्वस्ताः सावित्राः विंशे । अथैकविंशे यूपे । वत्सतर्यः सारस्वत्यः एकविंशे । श्यामाः पौष्णाः एक० । एताः कर्बुराः शुनासीरीयाः शुनासीरदेवताः एक० । श्वेताः त्रयो वायव्याः वायुदेवत्याः एक० । श्वेताः त्रयः सौर्याः सूर्यदेवताः एक० । एवं समाप्ताः यूपाः । इत्यश्वाद्याः सौर्यान्ताः सप्तविंशत्यधिकशतत्रयं ग्राम्याः पशवः सर्वे उक्ताः ॥ १९ ॥

वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरीञ्छरदे वर्त्तिका हेमन्ताय ककरान्छिशिराय विककरान् ॥ २० ॥

[ वसन्ताय । कपिञ्जलान् । आ । लभते । ग्रीष्माय । कलविङ्कान् । वर्षाभ्यः । तित्तिरीन् । शरदे । वर्त्तिकाः । हेमन्ताय । ककरान् । शिशिराय । विककरानितिविककरान् ॥२०॥ ]

(सब यूपों में यह तीन सौ सत्ताइस ग्राम्य पशु हुए)। वसन्त के लिए कपिञ्जलों को आलम्भन करे। ग्रीष्म के लिए कलविंकों को, वर्षा के लिए तीतरों को, शरद् के लिए बटेरों को, हेमन्त के लिए ककर को और शिशिर के लिए विकिकिरों को आलम्भन करे ॥ २० ॥

**उ०** वसन्ताय कपिञ्जलानालभते इत्यादयः विश्वेषां देवानां पृषन्त इत्येवमन्ता यूपान्तरेषु त्रयोदश त्रयोदशारण्याः पशव आलभ्यन्ते ॥ २० ॥

**म०** अथारण्याः पशव उच्यन्ते । अत्रैकविंशतिर्यूपाः तेषां यूपानां विंशतिरन्तरालानि तेष्वन्तरालेषु अन्तरालोत्पत्तिक्रमेण कपिञ्जलादयस्त्रयोदश त्रयोदश पशव आलम्भनीयाः । अत्र यूपान्तरालेष्वारण्यपशूनां बन्धनोपाय उक्तो मानवसूत्रे । नाडीषु क्षुमिमशकान् करण्डेषु सर्पान् पञ्जरेषु मृगव्याघ्रसिंहान् कुम्भेषु मकरमत्स्यमण्डूकान् जालेषु पक्षिणः कारासु हस्तिनो नौषु चौदकानि यथार्थमितरानिति । ये पशवो येनोपायेन यूपान्तरालेषु तिष्ठन्ति ते तेनोपायेन स्थापनीया इति तात्पर्यम् । अत्र येषामारण्यजीववाचिपदानामर्था न ज्ञायन्ते ते निगमनिरुक्तनिघण्टुव्याकरणोणादिवृत्त्यभिधानग्रन्थेभ्यो विलोक्यावगन्तव्याः । आटविकेभ्यश्च लक्षणीयाः । तत्र प्रथमोत्पन्ने यूपान्तराले त्रीन् कपिञ्जलान् वसन्ताय आलभते नियुनक्ति । त्रीन् कलविङ्कान् चटकान् ग्रीष्माय । तित्तिरीन् त्रीन् वर्षाभ्यः । वर्तिकाः पक्षिविशेषान् शरदे । ततस्त्रयाणां ककराणां मध्ये एकं ककरं हेमन्ताय । अथ द्वितीयेऽवकाशे शिष्टौ द्वौ ककरौ पक्षिविशेषौ हेमन्ताय । त्रीन् विककरान् शिशिराय ॥ २० ॥

समुद्राय शिशुमारानालभते पर्जन्याय मण्डूकानद्भ्यो मत्स्यान्मित्राय कुलीपयान्वरुणाय नाक्रान् ॥ २१ ॥

[ समुद्राय । शिशुमारानितिशिशुमारान् । आ । लभते । पर्जन्याय । मण्डूकान् । अद्भ्यऽइत्यत्ऽभ्यः । मत्स्यान् । मित्राय । कुलीपयान् । वरुणाय । नाक्रान् ॥२१॥ ]

समुद्र के लिए शिशुमारों, पर्जन्य के लिए मंडूकों, जलों के लिए मत्स्यों, मित्र के लिए कुलीपय मत्स्य और वरुण के लिए नाकाओं को आलम्भन करे ॥ २१ ॥

**उ०** त्रीन् शिशुमारान् जलचरजन्तून् समुद्रायालभते । त्रीन्मण्डूकान्भेकान् पर्जन्याय । त्रयाणां मत्स्यानां मध्ये द्वौ अद्भ्यः । अथ तृतीयेऽवकाशे एकं शिष्टं मत्स्यमद्भ्यः । त्रीन्

कुलीपयान् सोमाय । जलजान् मित्राय । त्रीन् नाक्रान् नक्रा एव नाक्रास्ताञ्जलचरान् वरुणाय ॥ २१ ॥

म० त्रीन् शिशुमारान् जलचरजन्तून् समुद्रायालभते । त्रीन्मण्डूकान्भेकान् पर्जन्याय । त्रयाणां मत्स्यानां मध्ये द्वौ अद्भ्यः । अथ तृतीयेऽवकाशे एकं शिष्टं मत्स्यमद्भ्यः । त्रीन् कुलीपयान् जलजान् मित्राय । त्रीन् नाक्रान् नक्रा एव नाक्रास्ताञ्जलचरान् वरुणाय ॥ २१ ॥

सोमा॑य हꣳ॒सानाल॑भते वा॒यवे॑ ब॒लाका॑ इन्द्रा॒ग्निभ्यां॒ क्रुञ्चा॒न्मि॒त्राय॑ म॒द्गून्वरु॑णाय चक्रवा॒कान् ॥ २२ ॥

[ सोमा॑य । हꣳ॒सान् । आ । ल॒भ॒ते । वा॒यवे॑ । ब॒लाकाः॑ । इ॒न्द्रा॒ग्निभ्या॒मिती॑न्द्राग्नि भ्याम् । क्रुञ्चा॑न् । मि॒त्राय॑ । म॒द्गून् । वरु॑णाय । च॒क्र॒वा॒काानिति॑चक्र वाकान ॥२२॥ ]

सोम के लिए हंसों को आलम्भन करे, वायु के लिए बगुलियों को, इन्द्र-अग्नि के लिए सारसों, मित्र के लिए मद्गू और वरुण के लिए चक्रवाकों को आलम्भन करे ॥ २२ ॥

उ० त्रीन् हंसान् तिस्रो बलाकाः बकपत्नीः वायवे । अथ चतुर्थेऽवकाशे । त्रीन् क्रुञ्चान् पक्षिणः इन्द्राग्निभ्याम् । त्रीन् मद्गून् जलकाकान् मित्राय । त्रीन् चक्रवाकान् वरुणाय ॥२२॥

म० त्रीन् हंसान् सोमाय । तिस्रो वलाकाः बकपत्नीः वायवे । अथ चतुर्थेऽवकाशे । त्रीन् क्रुञ्चान् पक्षिणः इन्द्राग्निभ्याम् । त्रीन् मद्गूञ्जलकाकान् मित्राय । त्रीन् चक्रवाकान् वरुणाय ॥ २२ ॥

अ॒ग्नये॑ कु॒टरू॒नाल॑भते॒ व॒न॒स्पति॑भ्य॒ उलू॑काना॒ग्नीषोमा॑भ्यां॒ चाषा॑न॒श्विभ्या॑म् म॒यूरा॑न्मि॒त्रावरु॑णाभ्यां क॒पोता॑न् ॥ २३ ॥

[ अ॒ग्नये॑ । कु॒टरू॑न् । आ । ल॒भ॒ते । व॒न॒स्पति॑भ्य॒ इति॑व॒न॒स्पति॑ भ्यः । उलू॑कान् । अ॒ग्नीषोमा॑भ्याम् । चाषा॑न् । अ॒श्विभ्या॒मित्य॒श्वि भ्याम् । म॒यूरा॑न् । मि॒त्रा॒वरु॑णाभ्याम् । क॒पोता॑न् ॥२३॥ ]

अग्नि के लिए कुक्कुटों को, वनस्पतियों के लिए उलूकों, अग्नि-सोम के लिए चाषों को, अश्विनौ के लिए मयूरों को और मित्रवरुण के लिए कपोतों को आलम्भन करे ॥ २३ ॥

उ० त्रीन् कुटरून् कुक्कुटानग्नये । ततस्त्रयाणामुलूकानां मध्ये एकमुलूकं वनस्पतिभ्यः । अथ पञ्चमेऽवकाशे द्वौ उलूकौ काकवैरिणौ । त्रीन् चाषानग्नीषोमाभ्याम् त्रीन्मयूरानश्विभ्यां त्रीन्कपोतान्मित्रावरुणाभ्याम् ॥ २३ ॥

म० त्रीन् कुटरून् कुक्कुटानग्नये । ततस्त्रयाणामुलूकानां मध्ये एकमुलूकं वनस्पतिभ्यः । अथ पञ्चमेऽवकाशे द्वौ उलूकौ काकवैरिणौ । त्रीन् चाषानग्नीषोमाभ्यां त्रीन् मयूरानश्विभ्यां त्रीन् कपोतान् मित्रावरुणाभ्याम् ॥ २३ ॥

सोमा॑य ल॒वाना॑लभते॒ त्वष्ट्रे॑ कौ॒लीका॑न् गो॒षादी॑र्दे॒वाना॑म् पत्नी॑भ्यः कु॒लीका॑ देव॒जामिभ्यो॒ऽग्नये॑ गृ॒हप॑तये पारु॒ष्णान् ॥ २४ ॥

[ सोमा॑य । ल॒वान् । आ । ल॒भ॒ते । त्वष्ट्रे॑ । कौ॒लीका॑न् । गो॒षादीः॑ । गो॒सादी॒रिति॑गो सादीः॑ । दे॒वाना॑म् । पत्नी॑भ्यः । कु॒लीकाः॑ । दे॒व॒जामिभ्य॒ इति॑दे॒व॒जामि भ्यः । अ॒ग्नये॑ । गृ॒हप॑तय॒ इति॑गृ॒ह पतये । पा॒रु॒ष्णान ॥२४॥ ]

सोम के लिए लवा पक्षियों को आलम्भन करे। त्वष्टा के लिए कौलीकों को, गोह प्रभृति को देवपत्नियों के लिए, कुलीक पक्षी देवजातियों के लिए और गृहपति अग्नि के लिए पारुष्ण पक्षियों को आलम्भन करे ॥ २४ ॥

उ० त्रयाणां लवानां लावकानां मध्ये द्वौ सोमाय अथ षष्ठेऽवकाशे एकं लवं सोमाय । कौलीकान् पक्षिणः त्वष्ट्रे । तिस्रो गोपादीः गवां सादयित्रीः पक्षिणीः देवानां पत्नीभ्यः । तिस्रः कुलीकाः पक्षिणीः देवजामिभ्यः देववधूभ्यः । 'जामिः स्वसृकुलस्त्रियोः' । त्रीन्पारुष्णसंज्ञान्गृहपतयेऽग्नये ॥ २४ ॥

म० त्रयाणां लवानां लावकानां मध्ये द्वौ सोमाय । अथ षष्ठेऽवकाशे एकं लवं सोमाय । कौलीकान् पक्षिणः त्वष्ट्रे । तिस्रो गोपादीः गवां सादयित्रीः पक्षिणीः देवानां पत्नीभ्यः । तिस्रः कुलीकाः पक्षिणीः देवजामिभ्यः देववधूभ्यः । 'जामिः स्वसृकुलस्त्रियोः' । त्रीन् पारुष्णसंज्ञान् गृहपतयेऽग्नये ॥ २४ ॥

अह्ने॑ पारा॒वता॒नाल॑भते॒ रात्र्यै॑ सीचा॒पूर॑होरा॒त्रयोः॑ स॒न्धिभ्यो॑ ज॒तूर्मासे॑भ्यो दात्यौ॒हान्सं॑वत्स॒राय॑ मह॒तः सु॒पर्णा॑न् ॥ २५ ॥

[ अह्ने॑ । पा॒रा॒वता॑न् । आ । ल॒भ॒ते । रात्र्यै॑ । सी॒चा॒पूः । अ॒हो॒रा॒त्रयोः॑ । स॒न्धिभ्य॒ इति॑स॒न्धि भ्यः । ज॒तूः । मासे॑भ्यः । दा॒त्यौ॒हान् । सँ॒व॒त्स॒राय॑ । म॒ह॒तः । सु॒प॒र्णानिति॑सु प॒र्णान् ॥२५॥ ]

दिन के लिए कपोतों को आलम्भन करे। रात्रि के लिए सीचापू पक्षी, अहोरात्रि की सन्धियों के लिए जतूपात्र पक्षी, मासों के लिए दात्यौह पक्षियों को और संवत्सर के लिए बड़े गरुड पक्षियों को आलम्भन करे ॥ २५ ॥

उ० अथ सप्तमेऽवकाशे त्रीन्पारावतान्कलरवाह्ने । तिस्रः

सीचापूः पक्षिणीः रात्र्यै । तिस्रो जतूः पात्राख्याः अहोरात्रयोः सन्धिभ्यः । त्रीन्दात्यूहान् कालकण्ठान्मासेभ्यः । त्रयाणां महतां सुपर्णानां मध्ये एकं संवत्सराय । अथाष्टमेऽवकाशे द्वौ महान्तौ सुपर्णौ संवत्सराय ॥ २५ ॥

**म०** अथ सप्तमेऽवकाशे त्रीन् पारावतान् कलरवानहे । तिस्रः सीचापूः पक्षिणी रात्र्यै । तिस्रो जतूः पात्राख्याः पक्षिणीः अहोरात्रयोः सन्धिभ्यः । त्रीन् दात्यूहान् कालकण्ठान् मासेभ्यः । त्रयाणां महतां सुपर्णानां मध्ये एकं संवत्सराय । अथाष्टमेऽवकाशे द्वौ महन्तौ सुपर्णौ संवत्सराय ॥ २५ ॥

भूम्या आखूनालभतेऽन्तरिक्षाय पाङ्क्तान्दिवे कशान्दिग्भ्यो नकुलान्बभ्रुकानवान्तरदिशाभ्यः २६

[ भूम्यै । आखून् । आ । लभते । अन्तरिक्षाय । पाङ्क्त्रान् । दिवे । कशान् । दिग्भ्यऽइतिदिक् भ्यः । नकुलान् । बभ्रुकान् । अवान्तरदिशाभ्यऽइत्यवान्तर दिशाभ्यः ॥२६॥ ]

भूमि के लिए चूहों को आलम्भन करे। अन्तरिक्ष के लिए पाङ्क्तों ( =विशेष चूहों ) को, द्युलोक के लिए कशों ( =चूहे विशेष ), दिशाओं के लिए नेवलों और आवान्तर दिशाओं के लिए बभ्रुकों को आलम्भन करे ॥ २६ ॥

**उ०** भूम्यै आखून्मूषकान् त्रीन् पाङ्क्तान् मूषकजातिविशेषानन्तरिक्षाय । काशान् तद्भेदानेव दिवे । त्रीन्नकुलान्दिग्भ्यः तत्र द्वौ अष्टमं । अथ नवमे एकम् त्रीन्बभ्रुकानवान्तरदिशाभ्यः ॥ २६ ॥

**म०** भूम्यै आखून् मूषकान् त्रीन् पाङ्क्तान् मूषकजातिविशेषानन्तरिक्षाय । काशान् तद्भेदानेव दिवे । त्रीन् नकुलान् दिग्भ्यः तत्र द्वौ अष्टमे । अथ नवमे एकम् । त्रीन् बभ्रुकानवान्तरदिशाभ्यः ॥ २६ ॥

वसुभ्य ऋश्यानालभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून् विश्वेभ्यो देवेभ्यः पृषतान् साध्येभ्यः कुलुङ्गान् ॥ २७ ॥

[ वसुभ्यऽइतिवसु भ्यः । ऋश्यान् । आ । लभते । रुद्रेभ्यः । रुरून् । आदित्येभ्यः । न्यङ्कून् । विश्वेभ्यः । देवेभ्यः । पृषतान् । साध्येभ्यः । कुलुङ्गान् ॥२७॥ ]

वसुओं के लिए ऋश्या मृगों को आलम्भन करे। रुद्रों के लिए रुरुओं को, आदित्यों के लिए न्यकुओं को, विश्वेदेवों के लिए पृषतों को तथा साध्य देवों के लिए कुलुङ्गों को आलम्भन करे ॥ २७ ॥

**उ०** त्रीनृष्यान्वसुभ्यः । ऋष्यादयो मृगविशेषाः रुद्रेभ्यः रुरून् । त्रीन्न्यङ्कूनादित्येभ्यः । अथ दशमेऽवकाशे त्रीन् पृषतान्विश्वेभ्यो देवेभ्यः । त्रीन् कुलुङ्गान् साध्येभ्यः ॥ २७ ॥

**म०** त्रीनृष्यान् वसुभ्यः । ऋष्यादयो मृगविशेषाः । रुद्रेभ्यः रुरून् । त्रीन् न्यङ्कूनादित्येभ्यः । अथ दशमेऽवकाशे त्रीन् पृषतान् विश्वेभ्यो देवेभ्यः । त्रीन् कुलुङ्गान् साध्येभ्यः ॥ २७ ॥

ईशानाय परस्वत आलभते मित्राय गौरान्वरुणाय महिषान्बृहस्पतये गवयाँस्त्वष्ट्र उष्ट्रान् ॥२८॥

[ ईशानाय । परस्वतः । आ । लभते । मित्राय । गौरान् । वरुणाय । महिषान् । बृहस्पतये । गवयान् । त्वष्ट्रे । उष्ट्रान् ॥२८॥ ]

ईशानदेव के लिए परस्वत मृगों को आलम्भन करे। मित्रदेव के लिए गौर मृगों को, वरुण के लिए महिषों को, बृहस्पति के लिए गवयों को और त्वष्टा के लिए उष्ट्रों को आलम्भन करे ॥ २८ ॥

**उ०** परस्वतः मृगविशेषानीशानाय । त्रीन्गौरान्मृगान्मित्राय । त्रीन्महिषान्वरुणाय तत्रैकं दशमे । अथैकादशेऽवकाशे त्रीन् गवयान्गोसदृशानारण्यपशून्बृहस्पतये । त्रीनुष्ट्रान् त्वष्ट्रे ॥ २८ ॥

**म०** परस्वतः मृगविशेषानीशानाय । त्रीन् गौरान्मृगान् मित्राय । त्रीन् महिषान्वरुणाय तत्रैकं दशमे । अथैकादशेऽवकाशे त्रीन् गवयान्गोसदृशानारण्यपशून् बृहस्पतये । त्रीनुष्ट्रान् त्वष्ट्रे ॥ २८ ॥

प्रजापतये पुरुषान्हस्तिन आलभते वाचे प्लुषीश्चक्षुषे मशकाञ्छ्रोत्राय भृङ्गाः ॥ २९ ॥

[ प्रजापतयऽइतिप्रजा पतये । पुरुषान् । हस्तिनः । आ । लभते । वाचे । प्लुषीन् । चक्षुषे । मशकान् । श्रोत्राय । भृङ्गाः ॥२९॥ ]

प्रजापति के लिए पुरुष-हाथियों को आलम्भन करे। वाणी के लिए वक्रतुण्डों को, चक्षु के लिए मच्छरों को और श्रोत्र के लिए भँवरों को आलम्भन करे ॥ २९ ॥

**उ०** प्रजापतये पुरुषान्हस्तिनः त्रीन् । त्रीन् प्लुषीन्वक्रतुण्डान्वाचे । तन्मध्ये द्वौ प्लुषी एकादशे । अथ द्वादशेऽवकाशे एकं प्लुषिम् । त्रीन्मशकान् चक्षुषे । त्रयो भृङ्गाः श्रोत्राय नियोज्याः ॥ २९ ॥

**म०** प्रजापतये पुरुषान् हस्तिनः त्रीन् । त्रीन् प्लुषीन् वक्रतुण्डान् वाचे तन्मध्ये द्वौ प्लुषी एकादशे । अथ द्वादशेऽवकाशे एकं प्लुषिम् । त्रीन् मशकान् चक्षुषे । त्रयो भृङ्गाः श्रोत्राय नियोज्याः ॥ २९ ॥

प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः शार्दूलाय

रोहिद्दृष्यभाय गवयी क्षिप्रश्येनाय वर्तिका नीलङ्गोः क्रमिः समुद्राय शिशुमारो हिमवते हस्ती ॥ ३० ॥

[ प्रजापतयऽइतिप्रजा पतये । च । वायवे । च । गोमृगऽइतिगो मृगः । वरुणाय । आरण्यः । मेषः । यमाय । कृष्णः । मनुष्यराजायेतिमनुष्य राजाय । मर्कटः । शार्दूलाय । रोहित् । ऋषभाय । गवयी । क्षिप्रश्येनायेतिक्षिप्र श्येनाय । वर्तिका । नीलङ्गोः । क्रिमिः । समुद्राय । शिशुमारऽइतिशिशु मारः । हिमवतऽइतिहिम वते । हस्ती ॥३०॥ ]

प्रजापति-वायु के लिए गोमृग, वरुण के लिए अरण्यमेष, यम के लिए कृष्ण मेष, मनुष्य राजा के लिए एक मर्कट; सिंह के लिए ऋष्यमृग; ऋषभ के लिए गवयी, क्षिप्रश्येन के लिए बटेर, नीलङ्गु के लिए कीट, समुद्र के लिए शिशुमार और हिमालय के लिए हाथी का आलम्भन करे ॥ ३० ॥

उ० प्रजापतये च वायवे च एको गोमृगः गवयः । एक आरण्यो मेषो वरुणाय । एकः कृष्णो मेषो यमाय । एको मर्कटः मनुष्यराजाय । एको रोहिद्दृष्यः शार्दूलाय । एका गवयी ऋषभाय तदाख्यदेवाय । अथ त्रयोदशेऽवकाशे एका वर्तिका क्षिप्रश्येनाय देवाय । एकः कृमिः कीटः नीलङ्गोः नीलङ्गवे । शिशुमारः एको जलचरः समुद्राय । हस्ती हिमवते ॥ ३० ॥

म० प्रजापतये च वायवे च एको गोमृगः गवयः । एक आरण्यो मेषो वरुणाय । एकः कृष्णो मेषो यमाय । एको मर्कटः मनुष्यराजाय । एको रोहिद्दृष्यः शार्दूलाय । एका गवयी ऋषभाय तदाख्यदेवाय । अथ त्रयोदशेऽवकाशे एका वर्तिका क्षिप्रश्येनाय देवाय । एकः कृमिः कीटः नीलङ्गोः नीलङ्गवे । शिशुमारः एको जलचरः समुद्राय । हस्ती हिमवते ॥ ३० ॥

मयुः प्राजापत्य उलो हलिक्ष्णो वृषदꣳशस्ते धात्रे दिशां कङ्को धुङ्क्षाग्नेयी कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्चः ॥ ३१ ॥

[ मयुः । प्राजापत्यऽइतिप्राजा पत्यः । उलः । हलिक्ष्णः । वृषदꣳशऽइतिवृष दꣳशः । ते । धात्रे । दिशाम् । कङ्कः । धुङ्क्षा । आग्नेयी । कलविङ्कः । लोहिताहिरितिलोहित अहिः । पुष्करसादऽइतिपुष्कर सादः । ते । त्वाष्ट्राः । वाचे । क्रुञ्चः ॥३१॥ ]

प्रजापतिदेवताक तुरङ्गवदन किन्नर, उवमृग, हलिक्ष्णसिंह और वृषदंश विडाल धाता के लिए, बगुला दिशाओं के लिए, काकिनी अग्निदेवताक; चटक, रक्तसर्प व कमल पर बैठने वाला पक्षिविशेष त्वष्टादेवताक हैं। ( चौदहवें अन्तराल में— ) वाक् के लिए सारस ॥ ३१ ॥

उ० मयुः प्राजापत्यः तुरङ्गवदनः किन्नरः प्रजापतिदैवतः । उलो मृगविशेषः हलिक्ष्णः सिंहविशेषः वृषदंशो विडालः ते त्रयो धात्रे । एकः कङ्कः बकः दिशां दिग्भ्यः । एका धुङ्क्षा पक्षिणी आग्नेयी अग्निदेवत्या । कलविङ्कः चटकः लोहिताहिः रक्तवर्णसर्पः पुष्करसदः पुष्करे सीदतीति कमलभक्षी पक्षिविशेषः ते त्रयः त्वाष्ट्राः त्वष्टृदेवताः । अथ चतुर्दशेऽवकाशे एकः क्रुञ्चः वाचे ॥ ३१ ॥

म० मयुः प्राजापत्यः तुरङ्गवदनः किन्नरः प्रजापतिदेवतः । उलो मृगविशेषः हलिक्ष्णः सिंहविशेषः वृषदंशो विडालः ते त्रयो धात्रे । एकः कङ्कः बकः दिशां दिग्भ्यः । एका धुङ्क्षा पक्षिणी आग्नेयी अग्निदेवत्या । कलविङ्कः चटकः लोहिताहिः रक्तवर्णसर्पः पुष्करसादी पुष्करे सीदतीति कमलभक्षी पक्षिविशेषः ते त्रयः त्वाष्ट्राः त्वष्टृदेवताः । अथ चतुर्दशेऽवकाशे एकः क्रुञ्चः वाचे ॥ ३१ ॥

सोमाय कुलुङ्ग आरण्योऽजो नकुलः शका ते पौष्णाः क्रोष्टा मायोरिन्द्रस्य गौरमृगः पिद्वो न्यङ्कुः कक्कटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाकः ॥ ३२ ॥

[ सोमाय । कुलुङ्गः । आरण्यः । अजः । नकुलः । शका । ते । पौष्णाः । क्रोष्टा । मायोः । इन्द्रस्य । गौरमृगऽइतिगौर मृगः । पिद्वः । न्यङ्कुः । कक्कटः । ते । अनुमत्याऽइत्यनु मत्यै । प्रतिश्रुत्कायाऽइतिप्रति श्रुत्कायै । चक्रवाकऽइतिचक्र वाकः ॥३२॥ ]

सोम के लिए कुलुङ्ग, आरण्य अज-नेवला-मयूरी पक्षी। वे पूषादेवताक हैं। मायु का सियार, गौरमृग इन्द्र का, पिद्व का न्यङ्कु मृग व कक्कट। वे अनुमति के लिए। चक्रवाक प्रतिश्रुत्का के लिए—॥ ३२ ॥

उ० कुलुङ्गः कुरङ्गो हरिण एकः सोमाय । आरण्यो वनजोऽजश्छागः नकुलः शका शकुन्तिः एते त्रयः पौष्णाः पूषदेवत्याः । क्रोष्टा शृगालो मायोर्देवस्य । एको गौरमृगः इन्द्रस्य । पिद्वो मृगविशेषः न्यङ्कुः अपि कक्कटः स एव ते त्रयोऽनुमत्यै । चक्रवाकः प्रतिश्रुत्कायै ॥ ३२ ॥

म० कुलुङ्गः कुरङ्गो हरिण एकः सोमाय । आरण्यो वनजोऽजच्छागः नकुलः शका शकुन्तिः एते त्रयः पौष्णाः पूषदेवत्याः । क्रोष्टा शृगालो मायोर्देवस्य । एको गौरमृगः इन्द्रस्य । पिद्वो मृगविशेषः न्यङ्कुः अपि कक्कटः स एव ते त्रयोऽनुमत्यै । चक्रवाकः प्रतिश्रुत्कायै ॥ ३२ ॥

सौरी बलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवाक् श्वाविद्भौमी शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शुकः पुरुषवाक् ॥३३॥

[ सौरी । बलाका । शार्गः । सृजयः । शयाण्डकऽइतिशय आण्डकः । ते । मैत्राः । सरस्वत्यै । शारिः । पुरुषवागितिपुरुष वाक् । श्वावित् । श्वविदितिश्व वित् । भौमी । शार्दूलः । वृकः । पृदाकुः । ते । मन्यवे । सरस्वते । शुकः । पुरुषवागितिपुरुष वाक् ॥३३॥ ]

—सूर्यदेवता का बगुली, शार्ग पक्षी रखे। ( अब पन्द्रहवें अवकाश में— ) सृजय और शयाण्डक पक्षी। वे मित्रदेवताक हैं। मनुष्यवाक् मैना सरस्वती के लिए। सेधा भूमिदेवताक है। व्याघ्र, वृक, चीता और सर्प मन्यु के लिए। समुद्र के लिए पुरुषवाक् का तोता आलम्भन करे ॥ ३३ ॥

उ० बलाका बकस्त्री सूर्यदेवत्या। शार्गः पक्षिविशेषः। अथ पञ्चदशेऽवकाशे सृजयः पक्षिविशेषः शयाण्डकोऽपि ते मैत्राः मित्रदेवत्याः। पुरुषवाक् मनुष्यवद्वादिनी शारिः शुकी सरस्वत्यै। श्वावित् सेधा भौमी भूदेवत्या शार्दूलो व्याघ्रः वृकः चित्रकः पृदाकुः सर्पः ते त्रयो मन्यवे। पुरुषवाक् शुकः सरस्वते समुद्राय ॥ ३३ ॥

म० बलाका बकस्त्री सूर्यदेवत्या। शार्गः पक्षिविशेषः। अथ पञ्चदशेऽवकाशे सृजयः पक्षिविशेषः शयाण्डकोऽपि ते मैत्राः मित्रदेवत्याः। पुरुषवाक् मनुष्यवद्वादिनी शारिः शुकी सरस्वत्यै। श्वावित् सेधा भौमी भूदेवत्या शार्दूलो व्याघ्रः वृकः चित्रकः पृदाकुः सर्पः ते त्रयो मन्यवे। पुरुषवाक् शुकः सरस्वते समुद्राय ॥ ३३ ॥

सुपर्णः पार्जन्य आतिर्वाहसो दार्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलज आन्तरिक्षः प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः ॥ ३४ ॥

[ सुपर्णऽइतिसु पर्णः । पार्जन्यः । आतिः । वाहसः । दार्विदेतिदार्वि दा । ते । वायवे । बृहस्पतये । वाचः । पतये । पैङ्गराजऽइतिपैङ्ग राजः । अलजः । आन्तरिक्षः । प्लवः । मद्गुः । मत्स्यः । ते । नदीपतयऽइतिनदी पतये । द्यावापृथिवीयः । कूर्मः ॥३४॥ ]

गरुड पर्जन्यदेवताक है। आडी, वाहस व कठफोरवा पक्षी। वे वायु के लिए। वाणी के पालक बृहस्पति के लिए पैङ्गराज पक्षी। ( सोलहवें अन्तराल में— ) अन्तरिक्षदेवताक अलज, प्लव, मद्गु तथा मत्स्य। वे नदीपति सागर के लिए। द्यावापृथिवीदेवताक कछुआ—॥ ३४ ॥

उ० सुपर्णः गरुत्मान् पार्जन्यः पर्जन्याय। आतिः आडी वाहसः दार्विदा काष्ठकुट्टः ते त्रयः पक्षिविशेषाः वायवे। बृहस्पतये वाचस्पतये वाचो वाण्याः पतये इति बृहस्पतिविशेषणम्। ईदृशाय बृहस्पतये पैङ्गराजः पक्षिविशेषः। अथ षोडशेऽवकाशे अलजः पक्षिविशेषः आन्तरिक्षः अन्तरिक्षदेवतः। प्लवः जलपक्षी मद्गुः कारण्डवः मत्स्यः ते नदीपतये। कूर्मः कच्छपः द्यावापृथिवीयः द्यावापृथिवीदेवतः ॥ ३४ ॥

म० सुपर्णः गरुत्मान् पार्जन्यः पर्जन्याय। आतिः आडी वाहसः दार्विदा काष्ठकुट्टः ते त्रयः पक्षिविशेषाः वायवे। बृहस्पतये वाचस्पतये वाचो वाण्याः पतये इति बृहस्पतिविशेषणम्। ईदृशाय बृहस्पतये पैङ्गराजः पक्षिविशेषः। अथ षोडशेऽवकाशे अलजः पक्षिविशेषः आन्तरिक्षः अन्तरिक्षदेवतः। प्लवः जलपक्षी मद्गुः कारण्डवः मत्स्यः ते नदीपतये। कूर्मः कच्छपः द्यावापृथिवीयः द्यावापृथिवीदेवतः ॥ ३४ ॥

पुरुषमृगश्चन्द्रमसो गोधा कालका दार्वाघाटस्ते वनस्पतीनां कृकवाकुः सावित्रो हꣳसो वातस्य नाक्रो मकरः कुलीपयस्तेऽकूपारस्य ह्रियै शल्यकः ॥ ३५ ॥

[ पुरुषमृगऽइतिपुरुष मृगः । चन्द्रमसः । गोधा । कालका । दार्वाघाटः । दार्वाघातऽइतिदारु आघातः । ते । वनस्पतीनाम् । कृकवाकुरितिकृक वाकुः । सावित्रः । हꣳसः । वातस्य । नाक्रः । मकरः । कुलीपयः । ते । अकूपारस्य । ह्रियै । शल्यकः ॥३५॥ ]

—पुरुष-मृग चन्द्रमा का भक्ष्य है। गोह, कालका तथा सारस पक्षी। वे वनस्पतियों के हविष्यान्न हैं। ताम्रचूड (=मुर्गा) सवितादेवताक है। वायु का हंस है। नाका, मगर और कुलीप मत्स्य। वे समुद्र के हैं। ह्री के लिए स्याही है ॥ ३५ ॥

उ० पुरुषमृगः पुंमृगः चन्द्रमसः। गोधा कालका पक्षिविशेषः दार्वाघाटः सारसः ते वनस्पतीनाम्। कृकवाकुः ताम्रचूडः सावित्रः सवितृदेवतः हंसः वातस्य। नाक्रः मकरः कुलीपयः ते त्रयो जलचरविशेषाः अकूपारस्य समुद्रस्य। त्रयाणां मध्ये द्वौ षोडशे। अथ सप्तदशेऽवकाशे एकः कुलीपयः अकूपारस्य। शल्यकः श्वावित् ह्रियै देव्यै ॥ ३५ ॥

म० पुरुषमृगः पुंमृगः चन्द्रमसः। गोधा कालका पक्षिविशेषः दार्वाघाटः सारसः ते वनस्पतीनाम्। कृकवाकुः ताम्रचूडः सावित्रः सवितृदेवतः हंसः वातस्य। नाक्रः मकरः कुलीपयः ते त्रयो जलचरविशेषाः अकूपारस्य समुद्रस्य। त्रयाणां

मध्ये द्वौ षोडशे । अथ सप्तदशेऽवकाशे एकः कुलीपयः अकूपारस्य । शल्यकः श्वावित् ह्रियै देव्यै ॥ ३५ ॥

एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणां लोपाश आश्विनः कृष्णो रात्र्या ऋक्षो जतूः सुषिलीका त इतरजनानां जहका वैष्णवी ॥ ३६ ॥

[ एणी । अह्ने । मण्डूकः । मूषिका । तित्तिरिः । ते । सर्पाणाम् । लोपाशः । आश्विनः । कृष्णः । रात्र्यै । ऋक्षः । जतूः । सुषिलीकेति सुषि लीका । ते । इतरजनानामितीतर जनानाम् । जहका । वैष्णवी ॥३६॥ ]

मृगी दिन के लिए आलभ्य है । मण्डूक, मूषक व तीतर । वे सर्पों के लिए हैं । लोपाश अश्विनौदेवताक है । कृष्णमृग रात्रि के लिए आलम्भन करे । भालू, जतु और सुषिलीका । वे अन्य जनों के हैं । जोंक विष्णुदेवताक है ॥ ३६ ॥

उ० एणी मृगी अह्नः आलभ्या । मण्डूको मूषिका तित्तिरिः ते त्रयः सर्पाणाम् । लोपाशो वनचरविशेषः आश्विनः अश्विदेवतः । कृष्णो मृगः रात्र्यै । ऋक्षः भल्लूकः जतूः सुषिलीका एतौ पक्षिविशेषौ ते त्रयः इतरजनानां देवानाम् । जहका गात्रसङ्कोचनी वैष्णवी विष्णुदेवत्या ॥ ३६ ॥

म० एणी मृगी अह्नः आलभ्या । मण्डूको मूषिका तित्तिरिः ते त्रयः सर्पाणाम् । लोपाशो वनचरविशेषः आश्विनः अश्विदेवतः । कृष्णो मृगः रात्र्यै । ऋक्षः भल्लूकः जतूः सुषिलीका एतौ पक्षिविशेषौ ते त्रयः इतरजनानां देवानाम् । जहका गात्रसङ्कोचनी वैष्णवी विष्णुदेवत्या ॥ ३६ ॥

अन्यवापोऽर्धमासानामृश्यो मयूरः सुपर्णस्ते गन्धर्वाणामपामुद्रो मासां कश्यपो रोहित्कुण्डृणाची गोलत्तिका तेऽप्सरसां मृत्यवेऽसितः ॥ ३७ ॥

[ अन्यवाप इत्यन्य वापः । अर्द्धमासानामित्यर्द्ध मासानाम् । ऋश्यः । मयूरः । सुपर्ण इति सु पर्णः । ते । गन्धर्वाणाम् । अपाम् । उद्रः । मासाम् । कश्यपः । रोहित् । कुण्डृणाची । गोलत्तिका । ते । अप्सरसाम् । मृत्यवे । असितः ॥३७॥ ]

कोयल अर्धमासों का पक्षी है । ऋष्यमृग, मयूर और सुपर्ण । वे गन्धर्वों के पक्षी हैं । उद्र जलों का पक्षी है । कछुआ मासों का जीव है । रोहित मृग, कुण्ड्रिनाची व गोलत्तिका । वे अप्सराओं के जीव हैं । मृत्यु के लिए कृष्ण पशु बाँधे ॥ ३७ ॥

उ० अन्यवापः कोकिलाख्यः पक्षिविशेषोऽर्धमासानां पशुः । अथाष्टादशेऽवकाशे । ऋष्यो मृगविशेषः मयूरः बर्ही सुपर्णो गरुत्मान् ते गन्धर्वाणां पशवः । उद्रः जलचरः कर्कटसंज्ञः अपां पशुः । कश्यपः कच्छपः मासां मासानाम् । रोहित् ऋष्यः कुण्डृणाची वनचरीविशेषः गोलत्तिकापि ते त्रयोऽप्सरसाम् । असितः कृष्णः पशुर्मृत्यवे ॥ ३७ ॥

म० अन्यवापः कोकिलाख्यः पक्षिविशेषोऽर्धमासानां पशुः । अथाष्टादशेऽवकाशे । ऋष्यो मृगविशेषः मयूरः बर्ही सुपर्णो गरुत्मान् ते गन्धर्वाणां पशवः । रुद्रः जलचरः कर्कटसंज्ञः अपां पशुः । कश्यपः कच्छपः मासां मासानाम् । रोहित् ऋष्यः कुण्डृणाची वनचरीविशेषः गोलत्तिकापि ते त्रयोऽप्सरसाम् । असितः कृष्णः पशुर्मृत्यवे ॥ ३७ ॥

वर्षाहूर्ऋतूनामाखुः कशो मान्थालस्ते पितॄणां बलायाजगरो वसूनां कपिञ्जलः कपोत उलूकः शशस्ते निर्ऋत्यै वरुणायारण्यो मेषः ॥ ३८ ॥

[ वर्षाहूरिति वर्ष आहूः । ऋतूनाम् । आखुः । कशः । मान्थालः । ते । पितॄणाम् । बलाय । अजगरः । वसूनाम् । कपिञ्जलः । कपोतः । उलूकः । शशः । ते । निर्ऋत्या इति निः ऋत्यै । वरुणाय । आरण्यः । मेषः ॥३८॥ ]

मेकी ऋतुओं का जीव है । चूहा, कश व मन्थाल । वे पितरों के जीव हैं । बल के लिए अजगर को आलम्भन करे । वसुओं का कपिंजल है । कबूतर, उलूक तथा शश । वे निर्ऋति देवता के लिए आलम्य हैं । वरुण के लिए जंगली मेंड़ा का आलम्भन करना चाहिए ॥ ३८ ॥

उ० वर्षाहूः वर्षाभूः भेकी ऋतूनाम् । आखुः मूषकः कशः मान्थालश्च तद्विशेषौ ते त्रयः पितॄणाम् । अथैकोनविंशे । अजगरो महासर्पः बलाय । कपिञ्जलो वसूनाम् । कपोतः उलूकः शशः ते निर्ऋत्यै । आरण्यो मेषो वरुणाय ॥ ३८ ॥

म० वर्षाहूः वर्षाभूः भेकी ऋतूनाम् । आखुः मूषकः कशः मान्थालश्च तद्विशेषौ ते त्रयः पितॄणाम् । अथैकोनविंशे । अजगरो महासर्पः बलाय । कपिञ्जलो वसूनाम् । कपोतः उलूकः शशः ते निर्ऋत्यै । आरण्यो मेषो वरुणाय ॥ ३८ ॥

श्वित्र आदित्यानामुष्ट्रो घृणीवान् वार्ध्रीनसस्ते मत्या अरण्याय सृमरो रुरू रौद्रः क्वयिः कुटरुर्दात्यौहस्ते वाजिनां कामाय पिकः ॥ ३९ ॥

[ श्वित्रः । आदित्यानाम् । उष्ट्रः । घृणीवान् । घृणिवानिति घृणि वान् । वार्ध्रीनसः । ते । मत्यै । अरण्याय । सृमरः । रुरुः । रौद्रः । क्वयिः । कुटरुः । दात्यौहः । ते । वाजिनाम् । कामाय । पिकः ॥३९॥ ]

श्वेतपशु आदित्यों का भक्ष्य है। ऊँट, घृणीवा और वार्ध्रीनस्। ये मतिदेवी के लिए आलम्भ्य हैं। अरण्य के लिए सिमरी आलम्भ्य है। रुरु रुद्रदेवताक है। क्वयि, कुटरु और कालकण्ठ। ये वाजी देवों के भक्ष्य हैं। काम के लिए पिक का आलम्भन करना चाहिए ॥ ३९ ॥

**उ०** श्वित्रः श्वेतः पशुरादित्यानाम् । उष्ट्रः दीर्घग्रीवः घृणिवान् तेजस्वी पशुविशेषः । संहितायां घृणिशब्दो दीर्घः । वार्ध्रीनसः कण्ठे स्तनवानजः ते त्रयो मत्यै देव्यै । सृमरः गवयोऽरण्याय देवाय । रुरुः मृगः रौद्रः रुद्रदेवतः । क्वयिः पक्षिविशेषः । अथ विंशेऽवकाशे । कुटरुः कुकुटः दात्यौहः कालकण्ठः ते त्रयो वाजिनां देवानाम् । पिकः कोकिलः कामाय ॥ ३९ ॥

**म०** श्वित्रः श्वेतः पशुरादित्यानाम् । उष्ट्रः दीर्घग्रीवः घृणिवान् तेजस्वी पशुविशेषः । संहितायां घृणिशब्दो दीर्घः । वार्ध्रीनसः कण्ठे स्तनवानजः ते त्रयो मत्यै देव्यै । सृमरः गवयोऽरण्याय देवाय । रुरुः मृगः रौद्रः रुद्रदेवतः क्वयिः पक्षिविशेषः । अथ विंशेऽवकाशे । कुटरुः कुकुटः दात्यौहः कालकण्ठः ते त्रयो वाजिनां देवानाम् । पिकः कोकिलः कामाय ॥ ३९ ॥

खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिꣳहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः ॥ ४० ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां
चतुर्विंशोऽध्यायः ॥ २४ ॥

[ खड्गः । वैश्वदेव इति वैश्व देवः । श्वा । कृष्णः । कर्णः । गर्दभः । तरक्षुः । ते । रक्षसाम् । इन्द्राय । सूकरः । सिꣳहः । मारुतः । कृकलासः । पिप्पका । शकुनिः । ते । शरव्यायै । विश्वेषाम् । देवानाम् । पृषतः ॥४०॥ ]

[ ॥ इति वाजसनेयिसंहितापदे चतुर्विंशोऽध्यायः ॥ ]

गैण्डा विश्वेदेवदेवताक है। काला कुत्ता, लम्बकर्ण गर्दभ और मृगभक्षक भक्षु। ये राक्षसों के पशु हैं। इन्द्र के लिए सूकर आलम्भ्य है। मरुतदेवताक सिंह है। गिरगिटान, पिप्पका तथा शकुनि। ये शरव्या के लिए आलम्भ्य हैं। पृषत विश्वेदेवों का पशु है ॥ ४० ॥

इति 'तत्त्वबोधिनी' हिन्दीव्याख्यायां चतुर्विंशोऽध्यायः ॥ २४ ॥

**उ०** खड्गो मृगविशेषो विश्वदेवदेवतः एकः कृष्णः श्वा सारमेयः द्वितीयः कर्णो लम्बकर्णो गर्दभः तृतीयस्तरक्षुः मृगादनः ते त्रयो रक्षसां पशवः । सूकरः इन्द्राय । सिंहो मारुतः मरुद्देवतः । कृकलासः सरटः पिप्पका पक्षिणी शकुनिः पक्षी एते त्रयः शरव्यायै । एकः पृषतः मृगविशेषो विश्वेषां देवानां पशुर्भवति विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मीति योज्यः । एवं षष्ट्यधिकं शतद्वयमारण्याः पशव उक्ताः । अत्र द्वाविंशतिरेकादशिनः सप्तविंशत्यधिकानि त्रीणि शतानि अश्वादयः सौर्यान्ताः षडधिकं शतद्वयं कपिञ्जलादयः पृषतान्ता आरण्याः पशवः सर्वे मिलित्वा षट् शतानि नवाधिकानि पशवो भवन्ति । श्लोकश्च । षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि चेति । तेष्वारण्याः सर्वे उत्स्रष्टव्या न तु हिंस्याः ॥ ४० ॥

इति उवटकृतौ मन्त्रभाष्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

**म०** खड्गो मृगविशेषो विश्वदेवदेवतः । एकः कृष्णः श्वा सारमेयः द्वितीयः कर्णो लम्बकर्णो गर्दभः तृतीयस्तरक्षुः मृगादनः ते त्रयो रक्षसां पशवः । सूकरः इन्द्राय । सिंहो मारुतः मरुद्देवतः । कृकलासः सरटः पिप्पका पक्षिणी शकुनिः पक्षी ते त्रयः शरव्यायै । एकः पृषतः मृगविशेषो विश्वेषां देवानां पशुर्भवति । विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मीति योज्यः । एवं षष्ट्यधिकं शतद्वयमारण्याः पशव उक्ताः । अत्र द्वाविंशतिरेकादशिनः सप्तविंशत्यधिकानि त्रीणि शतानि अश्वादयः सौर्यान्ताः षष्ट्यधिकं शतद्वयं कपिञ्जलादयः पृषतान्ता आरण्याः पशवः सर्वे मिलित्वा षट्शतानि नवाधिकानि पशवो भवन्ति । श्लोकश्च । षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि चेति । तेष्वारण्याः सर्वे उत्स्रष्टव्या न तु हिंस्याः ॥ ४० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
गतोऽध्यायश्चतुर्विंशो देवतापशुवाचकः ॥ २४ ॥

[ वनस्पते । वीड्वङ्गऽइतिवीडु अङ्गः । हि । भूयाः । अस्मत्सखेत्यस्मत् सखा । प्रतरणऽइतिप्र तरणः । सुवीरऽइतिसु वीरः ॥ गोभिः । सन्नद्धऽइतिसम् नद्धः । असि । वीडयस्व । आस्थातेत्याऽस्थाता । ते । जयतु । जेत्वानि ॥५२॥ ]

हे रथ ! हमारा मित्र पार लगाने वाला और स्वयं ही वीर तुम दृढ़-अवयव होओ। तुम ताँत आदि से कसे हुए हो। दृढ़ होओ। तुम पर बैठने वाला वीर जीतने योग्य शत्रु-धनादि को जीते ॥ ५२ ॥

**उ०** वनस्पते वीड्वङ्गः। रथदुन्दुभिदेवत्यावृचौ त्रिष्टुभौ। ऐन्द्रो वान्त्योऽर्धर्चः। हे वनस्पते वानस्पत्य रथ। कृत्स्नवन्निगमः। वीड्वङ्गो हि भूयाः वीडुशब्दो दृढवचनः। दृढाङ्गो भव । अस्मत्सखा सन् । प्रतरण प्रतरन्त्यनेन संग्रामानिति प्रतरणः। सुवीरः साधुवीरः। यतश्च त्वम् गोभिः श्लेष्मचर्मभिः संनद्धोऽसि अतस्त्वां ब्रवीमि। वीडयस्व संस्तम्भय स्वात्मानम् आस्थाता ते संस्थाता च ते तव जयतु जेत्वानि जेतव्यानि ॥ ५२ ॥

**म०** तिस्र ऋचो रथदेवताः। हे वनस्पते वनस्पतिविकार काष्ठमय रथ, 'कृत्स्नवन्निगमः' ( निरु० २। ५ )। त्वं वीड्वङ्गः दृढाङ्गो भूयाः भव। वीडूनि अङ्गानि यस्य। कीदृशः। अस्मत्सखा अस्माकं मित्रभूतः। प्रतरणः प्रतरति संग्रामपारं गच्छति प्रतरणः। सुवीरः शोभनो वीरो रथी यत्र। किंच हे रथ, यतः त्वं गोभिः गोविकारैश्चर्मभिः सन्नद्धः बद्धोऽसि अतो वीडयस्व आत्मानं स्तम्भय। किंच ते तवास्थाता आरोढा रथी जेत्वानि जेतव्यानि रिपुधनानि जयतु। हि पादपूरणः ॥ ५२ ॥

दि॒वः पृ॑थि॒व्याः पर्योज॒ उद्भृ॑तं॒ वन॒स्पति॑भ्यः॒ पर्याभृ॑त॒ꣳ सहः॑। अ॒पामो॒ज्मानं॒ परि॒ गोभि॒रावृ॑त॒मिन्द्र॑स्य॒ वज्र॑ꣳ ह॒विषा॒ रथं॑ यज ॥ ५३ ॥

[ दिवः । पृथिव्याः । परि । ओजः । उद्भृतमित्युत्भृतम् । वनस्पतिभ्यऽइतिवनस्पतिभ्यः । परि । आभृतमित्याऽभृतम् । सहः ॥ अपाम् । ओज्मानम् । परि । गोभिः । आवृतमित्याऽवृतम् । इन्द्रस्य । वज्रम् । हविषा । रथम् । यज ॥५३॥ ]

द्यावापृथिवी का निकाला हुआ ओज; वनस्पतियों से निकाला गया अभिभवकारी बल; जलों का सार या रस और ताँतों से कसे हुए इस इन्द्र के वज्रांश रथ का हे अध्वर्यो ! यजन करो ॥ ५३ ॥

**उ०** दिवः पृथिव्याः दिवः द्युलोकात् यत् ओजः परि सर्वतः उद्धृतं उद्धृतम्। यच्च पृथिव्याः पृथिवीलोकात् परि उद्धृतम्। यच्च वनस्पतिभ्यः वनस्पतिसकाशात् परि सर्वतः आभृतम् आहृतम् सहः बलम्। यच्च अपां संबन्धि ओज्मानम् ओजःपरिमाणम्। तदेतच्चतुष्टयं रथभावमुपनीतम्। परिगोभिरावृतम् परि समन्तात् गोभिः गोविकारैः स्नायुश्लेष्मचर्मभिः आवृतमुपनिबद्धम् इन्द्रस्य वज्रम्। 'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार' इत्युपक्रम्य रथस्तृतीयं चेत्यभिधाय 'रथेन च शरेण च राजन्यबन्धव' इति श्रुतिः। तदभिप्रायमेतत्। हविषा तमीदृशं रथं यज हे अध्वर्यो ॥५३॥

**म०** हे अध्वर्यो, त्वं हविषा कृत्वा रथं यज । कीदृशं रथम्। दिवः द्युलोकात् पृथिव्याः भूमेः सकाशात् पर्युद्धृतं समन्तादुद्धृतम् ओजः तेजः तथा वनसतिभ्यो वृक्षेभ्यः पर्याभृतं समन्तादाहृतमानीतं सहः बलम्। तथा अपां जलानाम् ओज्मानं तेजःसारभूतम्। 'ओज बलतेजसोः' इति धातोः 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३। २। ७५ ) इति मनिन्। ओजयति बलिनं करोतीति ओज्मा तम्। द्यावाभूमीवृक्षजलानां तेजश्चतुष्टयेन निर्मितमित्यर्थः। तथा गोभिः किरणैः पर्यावृतं वेष्टितम् तेजोनिर्मितत्वात्। यद्वा गोभिः चर्मभिर्वेष्टितम्। तथा इन्द्रस्य वज्रमिन्द्रवज्राज्जातमित्यर्थः। इन्द्रो यदा वृत्राय वज्रं प्रजहार तदा वृत्रशरीरकाठिन्येन प्रतिहतं चतुर्धा जातम्। यूपः स्फ्यः रथः शरश्चेति चतुःखण्डाः तत्र यूपस्फ्यौ विप्रैर्गृहीतौ रथशरौ नृपैरिति श्रुतिकथानुसंधेया। 'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार' इत्युपक्रम्य रथस्तृतीयमित्यभिधाय 'रथेन च शरेण चेति राजन्यबन्धवः' ( १। २। ४। १—२ ) इति श्रुतेः। ईदृशं यजेत्यर्थः ॥ ५३ ॥

इन्द्र॑स्य॒ वज्रो॑ म॒रुता॒मनी॑कं मि॒त्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑। सेमां नो॑ ह॒व्यदा॑तिं जुषा॒णो देव॑ रथ॒ प्रति॑ ह॒व्या गृ॑भाय ॥ ५४ ॥

[ इन्द्रस्य । वज्रः । मरुताम् । अनीकम् । मित्रस्य । गर्भः । वरुणस्य । नाभिः ॥ सः । इमाम् । नः । हव्यदातिमितिहव्य दातिम् । जुषाणः । देव । रथ । प्रति । हव्या । गृभाय ॥५४॥ ]

इन्द्र का वज्रांश, मरुतों का मुखरूप, मित्र का गर्भ (=तेज) तथा वरुण की नाभि है—रथ। वह तुम हे रथदेव ! हमारी इस हविः की आहुति का सेवन करते हुए शत्रु के हविर्योग्य धनादि को छील लो ॥ ५४ ॥

**उ०** इन्द्रस्य वज्रः। यस्त्वम् इन्द्रस्य वज्रः असि मरुतां च अनीकं मुखमसि मित्रस्य च गर्भोऽसि वरुणस्य च नाभिरसि। सः त्वम् इमाम् नः अस्माकम्। हव्यदातिं हविषो दानम् जुषाणः सेवमानः । हे देवरथ, प्रतिहव्या गृभाय प्रतिगृभाय प्रतिगृहाण हव्या हवींषि ॥ ५४ ॥

**म०** हे रथ हे देव, स त्वं हव्या हवींषि प्रतिगृभाय प्रतिगृहाण । कीदृशः त्वम् । इन्द्रस्य वज्रः वज्रोत्पन्नत्वात् । मरुतामनीकं मुखं मुख्यः देवानां जयप्रापकत्वात् । मित्रस्य देवस्य गर्भः गीर्यते स्तूयते गर्भः । गृणातेर्भप्रत्ययः । सूर्येण स्तूयमानः । वरुणस्य नाभिः नभ्यतेऽरिर्हन्यतेऽनेनेति नाभिः 'नभ हिंसायाम्' इण्प्रत्ययः । वरुणस्य हननसाधनम् । नोऽस्माकमिमां हव्यदातिं हविषो दानं जुषाणः सेवमानः । सेमामित्यत्र 'सोऽचि लोपे चेत्पादपूरणम्' ( पा० ६ । १ । १३४ ) इति सन्धिः । गृभाय गृह्णातेः 'हलः श्नः शानज्झौ' ( पा० ३ । १ । ८३ ) इत्यनुवृत्तौ 'छन्दसि शायजपि' ( पा० ३ । १ । ८४ ) इति हौ परे श्नाप्रत्ययस्य शायजादेशः हस्य भश्च ॥ ५४ ॥

उप॑श्वासय पृथि॒वीमु॒त द्यां पु॑रु॒त्रा ते॑ मनुतां॒ विष्ठि॑तं॒ जग॑त् । स दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वैर्दू॒राद्दवी॑यो॒ अप॑सेध॒ शत्रू॑न् ॥ ५५ ॥

[ उप॑ । श्वा॒स॒य॒ । पृ॒थि॒वीम् । उ॒त । द्याम् । पु॒रु॒त्रेति॑ पुरु॒ऽत्रा । ते॒ । म॒नु॒ता॒म् । विष्ठि॑त॒मिति॒ विऽस्थि॑तम् । जग॑त् ॥ सः । दु॒न्दु॒भे॒ । स॒जूरिति॑ स॒ऽजूः । इन्द्रे॑ण । दे॒वैः । दू॒रात् । दवी॑यः । अप॑ । से॒ध॒ । शत्रू॑न् ॥५५॥ ]

हे दुन्दुभे ! तुम अपने निनाद से द्यावापृथिवी को गुंजा दो । सर्वत्र स्थित संसार तुम्हें सर्वत्र बजती हुई जाने (=तुम्हारा निनाद संसार में भर जावे) । हे दुन्दुभे ! वह तुम इन्द्र तथा अन्य देवों के साथ सप्रीति होकर दूर से भी दूर विद्यमान शत्रु को आगे बढ़ने से रोक दो ॥ ५५ ॥

**उ०** उपश्वासय उपशब्दस्व पृथिवीम् । उत द्याम् अपिच उपशब्दय द्याम् । पुरुत्रा ते बहुधा च ते तव एकस्य सतः घोषं मनुतां मन्यताम् । विष्ठितं विविधं स्थितं स्थावरम् । जगत् जङ्गमं च । यस्त्वमेवास्माभिः प्रार्थितः स त्वम् हे दुन्दुभे, सजूः समानप्रीतिः सन् इन्द्रेण सह देवैश्च । दूराद्दूरतरम् अपसेध अपगमय शत्रून् ॥ ५५ ॥

**म०** तिस्र ऋचो दुन्दुभिदेवत्याः । हे दुन्दुभे, स त्वं पृथिवीमुत द्यामन्तरिक्षमपि उपश्वासय उपशब्दय । श्वसिः शब्दार्थः । विष्ठितं विविधं स्थितं जगत् स्थावरजङ्गमात्मकं विश्वम् । पुरुत्रा बहुधा ते त्वां मनुतां जानातु दुन्दुभिर्नदतीति । स त्वं दूराद्दवीयः अतिदूरं शत्रूनपसेध अपगमय । अत्यन्तं दूरं दवीयः 'स्थूलदूर-' ( पा० ६ । ४ । १५६ ) इति रेफलोपपूर्वगुणौ । कीदृशः त्वम् । इन्द्रेण देवैश्च सजूः प्रीतियुक्तः ॥ ५५ ॥

आ क्र॑न्दय॒ बल॒मोजो॑ न॒ आ धा॒ निष्ट॑निहि दुरि॒ता बाध॑मानः । अप॑ प्रोथ दुन्दुभे दु॒च्छुना॑ इ॒त इन्द्र॑स्य मु॒ष्टिर॑सि वी॒डय॑स्व ॥ ५६ ॥

[ आ । क्र॒न्द॒य॒ । बल॑म् । ओजः॑ । नः॒ । आ । धाः॒ । निः । स्त॒नि॒हि॒ । दु॒रि॒तेति॑ दुः॒ऽइ॒ता । बाध॑मानः ॥ अप॑ । प्रो॒थ॒ । दु॒न्दु॒भे॒ । दु॒च्छुना॑ः । इ॒तः । इन्द्र॑स्य । मु॒ष्टिः । अ॒सि॒ । वी॒डय॑स्व ॥५६॥ ]

हे दुन्दुभे ! तुमुल ध्वान करो । हममें बल-ओज धारित करो । शत्रुओं को बाधित करते हुए ध्वनि करो । हे दुन्दुभे ! तुम दुःखदायी शत्रुओं को प्रतिषिद्ध करो । तुम इन्द्र की मुष्टि हो । दृढ़ा होओ ॥ ५६ ॥

**उ०** आक्रन्दय । हे दुन्दुभे, आक्रन्दय दीनान् शब्दान्कारय अहो पलायध्वं पिता मे हतो भ्राता मे हत इति बलं शत्रुसेनाम् ओजो न आधाः ओजस्तेजः न अस्माकम् आधाः आधेहि । किंच निष्टनिहि निश्चितं शब्दं जयाय कुरु । दुरिताबाधमानः दुरितानि अपगमयन् । किंच । अपप्रोथ । प्रोथतिर्नाशनार्थः । अपकृत्यापकृत्य प्रोथ नाशय । दुच्छुनाः दुष्टशुन इव याः सेनाः । सुखवचनो वा शुनाशब्दः । दुःसुखाः विसर्जनीयस्य दत्वम् । इतः सेनायाः । यतश्च त्वम् इन्द्रस्य मुष्टिरसि अतो ब्रवीमि । वीडयस्व दृढीकुरु आत्मानम् ॥ ५६ ॥

**म०** हे दुन्दुभे, त्वं बलं शत्रुसैन्यमाक्रन्दय रोदय । पलायध्वं मदीयाः सर्वे हता इत्यादिदीनरवं कारयेत्यर्थः । नोऽस्माकमोजः तेजः आधाः आधेहि देहि । दुरिता दुरितानि पापानि बाधमानो निराकुर्वन् सन् । निष्टनिहि शब्दं कुरु । 'स्तन शब्दे' चुरादिरदन्तः । किंच इतोऽस्मत्सेनायाः सकाशात् दुच्छुनाः दुष्टाश्च ते श्वानश्च दुच्छ्वानः तान्दुष्टान् शुनः श्वसदृशान् शत्रूनपप्रोथ नाशय । प्रोतथिर्नाशनार्थः । यतः त्वमिन्द्रस्य मुष्टिः असि मुष्टिवदङ्गभूतोऽसि । अतो वीडयस्व आत्मानमस्मान्दृढय ॥ ५६ ॥

आमूर॑ज प्र॒त्याव॑र्तये॒माः के॑तु॒मद्दु॑न्दु॒भिर्वा॑वदीति । समश्व॑पर्णा॒श्चर॑न्ति नो॒ नरो॒ऽस्माक॑मिन्द्र र॒थिनो॑ जयन्तु ॥ ५७ ॥

[ आ । अ॒मूः । अ॒ज॒ । प्र॒त्याव॑र्त॒येति॑ प्रति॒ आव॑र्तय । इ॒माः । के॒तु॒मदिति॑ केतु॒ मत् । दु॒न्दु॒भिः । वा॒व॒दी॒ति॒ ॥ सम् । अश्व॑पर्णा॒ इत्यश्व॑ऽपर्णाः । चर॑न्ति । नः॒ । नरः॑ । अ॒स्माक॑म् । इ॒न्द्र॒ । र॒थिनः॑ । ज॒य॒न्तु॒ ॥५७॥ ]

हे इन्द्र ! इन शत्रु-सेनाओं को तितर-बितर कर दो । इन आगे बढ़ती हुई शत्रु सेनाओं को पीछे लौटा दो । विजय के निनाद वाली दुन्दुभि वादन कर रही है । हमारे अश्ववेग योधा सर्वत्र संचरण कर रहे हैं । हे इन्द्र ! अब हमारे रथी ही विजय लाभ करें ॥ ५७ ॥

उ० आमूः । ऐन्द्री । आअज-आक्षिप । 'अज गतिक्षेपणयोः' । अमूः शत्रुसेनाः । प्रत्यावर्तय इमाः प्रत्यावर्तय जितंजितमिति इमाः अस्मदीयसेनाः । किंच केतुमत् प्रज्ञातवान् दुन्दुभिः वावदीति । लोडर्थे लट् अत्यर्थं वदतु । जयप्रकाशकम् । किंच समश्वपर्णाश्चरन्ति नो नरः । अत्रापि लोडर्थे लट् । संचरन्तु अश्वपर्णाः अश्वपतनाः । नो नरः अस्मदीया मनुष्याः संग्रामे । हे इन्द्र, नः अस्माकं रथिनः जयन्तु त्वत्प्रसादादिति शेषः ॥ ५७ ॥

म० हे इन्द्र, अमूः शत्रुसेनाः त्वमा अज समन्तात्परिक्षिप 'अज गतिक्षेपणयोः' । यतो दुन्दुभिः केतुमत् प्रज्ञावत् यथा वावदीति अत्यन्तं वदति अतः इमाः अस्मत्सेनाः प्रत्यावर्तय जयं प्रापय्य प्रत्यानय । किंच नोऽस्माकं नरः योधाः संचरन्ति । कीदृशा नरः । अश्वपर्णाः अश्वस्येव पर्णं पतनं येषां ते । किंच अस्माकं रथिनः रथस्थाः जयन्तु युद्धे जयं प्राप्नुवन्तु ॥ ५७ ॥

**आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः सꣳहितोऽधोरामः सावित्रो वारुणः कृष्ण एकशितिपात्पेत्वः ॥ ५८ ॥**

[ आग्नेयः । कृष्णग्रीवऽइतिकृष्ण ग्रीवः । सारस्वती । मेषी । बभ्रुः । सौम्यः । पौष्णः । श्यामः । शितिपृष्ठऽइतिशिति पृष्ठः । बार्हस्पत्यः । शिल्पः । वैश्वदेवऽइतिवैश्व देवः । ऐन्द्रः । अरुणः । मारुतः । कल्माषः । ऐन्द्राग्नः । सꣳहितऽइतिसम् हितः । अधोरामऽइत्यधः रामः । सावित्रः । वारुणः । कृष्णः । एकशितिपादित्येक शितिपात् । पेत्वः ॥५८॥ ]

काली गर्दनवाला बकरा अग्नि का पशु है। भेड़ सरस्वती सम्बन्धिनी है। पीताभ पशु सोमदेवताक है। श्यामपशु पूषादेवताक है। काली पीठ वाला पशु बृहस्पतिदेवताक है। विचित्रवर्ण पशु विश्वेदेवदेवताक है। रक्ताभ पशु इन्द्रदेवताक है। मटमैला पशु मरुतदेवताक है। दृढ़ाङ्ग पशु इन्द्र-अग्निदेवताक है। निम्नश्वेत पशु सवितादेवताक है। काला पशु वरुणदेवताक है अथवा वरुण का एक पैर का काला व गतिशील पशु होता है ॥ ५८ ॥

उ० आग्नेयः कृष्णग्रीव इति श्रुतिः आ अध्यायपरिसमाप्तेः । द्वयोरेकादशिन्योः पशुदेवतासंबन्धविधात्री परतो द्वादश हविषो वेष्टेर्देवताः ॥ ५८ ॥

म० अश्वमेधे श्रुतिरस्ति 'द्वे त्वेवैते एकादशिन्यावालभेतेति' ( पा० १३।५।१।३ ) तयोरेकादशिन्योः पशवस्तद्देवताश्च कण्डिकाद्वयेनोच्यन्ते । तेनेमानि ब्राह्मणवाक्यानि द्रव्यदेवताप्रतिपादकानि नतु मन्त्राः । कृष्णा ग्रीवा यस्य स कृष्णग्रीवः पशुराग्नेयः अग्निदेवत्यः १, मेषी सारस्वती सरस्वतीदेवताका २, बभ्रुः पिङ्गलवर्णः पशुः सौम्यः सोमदेवत्यः ३, श्यामः कृष्णवर्णः पौष्णः पूषदेवत्यः ४, शिति श्यामं पृष्ठं यस्य स शितिपृष्ठः बार्हस्पत्यः बृहस्पतिदेवत्यः ५, शिल्पो विचित्रवर्णो वैश्वदेवः विश्वदेवदेवत्यः ६, अरुणः रक्तः ऐन्द्रः इन्द्रदेवत्यः ७, कल्माषः कर्बुरो मारुतः मरुद्देवत्यः ८, संहितः दृढाङ्गः ऐन्द्राग्नः इन्द्राग्निदेवत्यः ९, अधोरामः अधोदेशे श्वेतः सावित्रः सवितृदेवत्यः १०, एकः शिति श्वेतः पादो यस्य स एकशितिपात् एकपदे श्वेतोऽन्यत्र कृष्णः पेत्वः पतनशीलो वेगवान् पशुः वारुणः वरुणदेवत्यः ११, एवमेकादश जाताः ॥ ५८ ॥

**अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती मेषी वारुणः पेत्वः ॥ ५९ ॥**

[ अग्नये । अनीकवतऽइत्यनीक वते । रोहिताञ्जिरिति रोहित अञ्जिः । अनड्वान् । अधोरामावित्यधः रामौ । सावित्रौ । पौष्णौ । रजतनाभीऽइतिरजत नाभी । वैश्वदेवावितिवैश्व देवौ । पिशङ्गौ । तूपरौ । मारुतः । कल्माषः । आग्नेयः । कृष्णः । अजः । सारस्वती । मेषी । वारुणः । पेत्वः ॥५९॥ ]

लाल तिलक वाला बैल अनीक( =मुख या सेना )वान् अग्नि के लिए आलम्भन करे। निम्नश्वेत दो पशु सवितादेवताक हैं। श्वेतनाभि दो पशु पूषादेवताक हैं। पीताभ व बिना सींगों के दो पशु विश्वेदेवों के हैं। मटमैला पशु मरुतदेवताक है। काला बकरा अग्निदेवताक है। सरस्वतीदेवताक मेषी है। वेगवान् पशु वरुणदेव का है ॥ ५९ ॥

उ० अग्नये इति स्पष्टार्थः ॥ ५९ ॥

म० द्वितीयैकादशिनीपशुदेवानाह । रोहितो रक्तोऽञ्जिस्तिलको यस्य सोऽनड्वान् वृषभोऽनीकवतेऽग्नये आलभ्यः । अनीकं मुखं सैन्यं वा यस्य सोऽनीकवान् तस्मै १, अधोरामौ अधोभागे श्वेतौ द्वौ पशू सावित्रौ सवितृदेवत्यौ २, ३, रजतवर्णा नाभिर्ययोस्तौ रजतनाभी द्वौ पौष्णौ पूषदेवत्यौ ४, ५, पिशङ्गौ पीतौ तूपरौ निःश्रृङ्गौ वैश्वदेवौ विश्वदेवदेवत्यौ ६, ७, कल्माषः कर्बुरो मारुतः ८, कृष्णः । श्यामोऽजो मेषः आग्नेयः अग्निदेवत्यः ९, मेषी सारस्वती १०, पेत्वः वेगवान् वरुणदेवत्यः ११, एवमेकादश ॥ ५९ ॥

**अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपाल**

इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्र औष्णिहाय त्रयस्त्रिꣳशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्या अष्टाकपालः ॥ ६० ॥

इति माध्यन्दिनीयायां वाजसनेयसंहितायां-
मूलात्रिंशोऽध्यायः ॥ २९ ॥

[ अग्नये । गायत्राय । त्रिवृतऽइतित्रि वृते । राथन्तरायेतिराथम् तराय । अष्टाकपालऽइत्यष्टा कपालः । इन्द्राय । त्रैष्टुभाय । त्रैस्तुभायेतित्त्रैस्तुभाय । पञ्चदशायेतिपञ्च दशाय । बार्हताय । एकादशकपालऽइत्येकादश कपालः । विश्वेभ्यः । देवेभ्यः । जागतेभ्यः । सप्तदशेभ्यऽइतिसप्त दशेभ्यः । वैरूपेभ्यः । द्वादशकपालऽइतिद्वादश कपालः । मित्रावरुणाभ्याम् । आनुष्टुभाभ्याम् । आनुस्तुभाभ्यामित्यानु स्तुभाभ्याम् । एकविꣳशाभ्यामित्येक विꣳशाभ्याम् । वैराजाभ्याम् । पयस्या । बृहस्पतये । पाङ्क्ताय । त्रिणवाय । त्रिनवायेतित्त्रि नवाय । शाक्कराय । चरुः । सवित्रे । औष्णिहाय । त्रयस्त्रिꣳशायेतित्त्रयः त्रिꣳशाय । रैवताय । द्वादशकपालऽइतिद्वादश कपालः । प्राजापत्यऽइतिप्राजा पत्यः । चरुः । अदित्यै । विष्णुपत्न्याऽइतिविष्णु पत्न्यै । चरुः । अग्नये । वैश्वानराय । द्वादशकपालऽइतिद्वादश कपालः । अनुमत्याऽइत्यनु मत्यै । अष्टाकपालऽइत्यष्टा कपालः ॥६०॥]

॥ इति वाजसनेयिसंहितापदे एकोनत्रिंशोऽध्यायः ॥

गायत्री छन्द, त्रिवृत्सोम तथा रथन्तर साम से स्तुत्य अग्नि के लिए आठ कपालों में पकाये गए पुरोडाश को बनाना चाहिए। त्रिष्टुप् छन्द, पञ्चदशस्तोम तथा बर्हित साम के द्वारा संस्तुत इन्द्र के लिए ग्यारह कपालों में संस्कृत पुरोडाश को पकावे। जगती छन्द, सप्तदश स्तोम तथा वैरूपसाम के द्वारा संस्तुत विश्वेदेवों के लिए बारह कपालों में संस्कृत पुरोडाश को पकावे। अनुष्टुप् छन्द, एकविंशस्तोम तथा वैराजसाम से संस्तुत मित्र-वरुण के लिए दूध में पकाया चरु प्रस्तुत करे। पंक्ति छन्द, त्रिणवस्तोम तथा शाक्वरसाम से संस्तुत बृहस्पति के लिए चरु पकावें। उष्णिक् छन्द, त्रयस्त्रिंश स्तोम तथा रैवत्साम से संस्तुत सविता के लिए बारह कपालों में संस्कृत पुरोडाश पकावें। प्रजापतिदेवताक चरु पकाना चाहिए। विष्णु की पत्नी अदिति के लिए भी चरु ही पकावें। वैश्वानर अग्नि के लिए द्वादशकपाल पुरोडाश पकावें और अनुमति के लिए आठ कपालों में संस्कृत पुरोडाश को पकावें ॥ ६० ॥

इति 'तत्त्वबोधिनी' हिन्दीव्याख्यायां एकोनत्रिंशोऽध्यायः ॥ २९ ॥

उ० अग्नयेऽष्टाकपालः पुरोडाशः कार्यः । कीदृशायाग्नये । गायत्राय त्रिवृता स्तुताय राथन्तराय साम्ना स्तुताय इन्द्राय त्रैष्टुभाय त्रिष्टुभा स्तुताय पञ्चदशाय पञ्चदशस्तोमस्तुताय । बार्हताय बृहत्सामस्तुताय । विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरोडाशः । कीदृशेभ्यः । जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः । सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः । वैरूपेभ्यः वैरूपसामस्तुतेभ्यः । मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः । कीदृशाभ्यामानुष्टुभाभ्याम् । अनुष्टुभा स्तुताभ्याम् । एकविंशाभ्यामेकविंशस्तोमस्तुताभ्याम् । वैराजाभ्यां वैराजसामस्तुताभ्याम् बृहस्पतये चरुः । कीदृशाय । पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तोमस्तुताय शाक्कराय शाक्करसामस्तुताय । सवित्रे द्वादशकपालः पुरोडाशः । कीदृशाय सवित्रे । औष्णिहाय उष्णिक् छन्दसा स्तुताय । त्रयस्त्रिंशाय त्रयस्त्रिंशस्तोमस्तुताय । रैवताय रैवतसामस्तुताय । एवं छन्दःस्तोमसामसहितान् षट् देवानभिधाय चतुरः केवलानाह । प्राजापत्यश्चरुः प्रजापतिदेवत्यश्चरुः कार्यः । विष्णुपत्न्यै अदित्यै चरुरेव । वैश्वानराय वैश्वानरगुणविशिष्टायाग्नये द्वादशकपालः पुरोडाशः । अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्यः ॥ ६० ॥

इति उवटकृतौ मन्त्रभाष्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

म० 'अथाग्नीषोमीयस्य पशुपुरोडाशमनुदिशामोऽवेष्टीर्निर्वपती'त्युपक्रम्य 'तदाहुर्दशहविषमन्त्यामिष्टिं निर्वपेत्' इति श्रुत्या दशहविष्कावेष्टिसंज्ञेष्टिः कथिता तस्या देवता हवींषि चाह । इमान्यपि ब्राह्मणवाक्यानि न मन्त्राः । अग्नयेऽष्टाकपालः पुरोडाशः कार्यः । अष्टसु कपालेषु संस्कृतोऽष्टाकपालः 'तद्धितार्थोत्तरपदसमाहारे च' ( पा० २ । १ । ५१ ) इति समासः । 'अष्टनः कपाले हविषि' ( पा० ६ । ३ । ४६ ) इत्यष्टन्शब्दस्य दीर्घः । कीदृशायाग्नये । गायत्राय गायत्र्या स्तुताय । त्रिवृते त्रिवृत्स्तोमेन स्तुताय । राथन्तराय रथन्तरसाम्ना स्तुताय१, इन्द्राय

एकादशकपालः पुरोडाशः । समासः पूर्ववत् । कीदृशाय इन्द्राय । त्रैष्टुभाय त्रिष्टुभा स्तुताय पञ्चदशाय पञ्चदशस्तोमस्तुताय बार्हताय बृहत्सामस्तुताय २, विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरोडाशः । कीदृशेभ्यः । जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः वैरूपसामस्तुतेभ्यः ३, मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः । कीदृशाभ्यामानुष्टुभ्भ्याम् । अनुष्टुभा स्तुताभ्याम् एकविंशाभ्यामेकविंशस्तोमस्तुताभ्याम् । वैराजाभ्यां वैराजसामस्तुताभ्याम् ४, बृहस्पतये चरुः । कीदृशाय पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तोमस्तुताय शाक्कराय शाक्करसामस्तुताय ५, सवित्रे द्वादशकपालः पुरोडाशः । कीदृशाय सवित्रे । औष्णिहाय उष्णिक्छन्दसा स्तुताय त्रयस्त्रिंशाय त्रयस्त्रिंशस्तोमस्तुताय रैवताय रैवतसामस्तुताय ६, एवं छन्दःस्तोमसामसहितान् षट् देवानभिधाय चतुरः केवलानाह । प्राजापत्यश्चरुः प्रजापतिदेवत्यश्चरुः कार्यः ७, विष्णुपत्न्यै अदित्यै चरुरेव ८, वैश्वानराय वैश्वानरगुणविशिष्टायाग्नये द्वादशकपालः पुरोडाशः ९, अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्यः १०, दशहविषाऽवेष्टेर्देवताहवींष्यपि अश्वमेधोपयोगित्वादुक्तानि समिद्धो अञ्जन्नाश्वमेधिकोऽध्याय इति कात्यायनोक्तेः अनुक्रमण्याम् ॥ ६० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
शिष्टाश्वमेधमन्त्रोक्तिर्गतोऽध्यायोऽङ्कदृगमितः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

देव॑ सवितः॒ प्रसु॑व य॒ज्ञं प्रसु॑व य॒ज्ञप॑तिं॒ भगा॑य । दि॒व्यो ग॑न्ध॒र्वः के॑त॒पूः केत॑ं नः पुनातु वा॒चस्प॑ति॒र्वाचं॑ नः स्वदतु ॥ १ ॥

हे सवितादेव ! यज्ञ को प्रेरित करो । यजमान को ऐश्वर्य के लिए प्रेरित करो । वाणी का धारक, दिव्य तथा विज्ञान को पवित्र करने वाला हमारे विज्ञान को पवित्र करे । वाणी का स्वामी हमारी स्तुति को आस्वादित करे ॥ १ ॥

तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्र॒चो॒दया॑त् ॥ २ ॥

सवितादेव के वरणीय उस तेज को हम धारण करते हैं, जो हमारी बुद्धियों-कर्मों को प्रेरित करे ॥ २ ॥

**उ०** इत उत्तरं पुरुषमेधः द्वावध्यायौ नारायणः पुरुषोऽपश्यत् । देवसवितः तिस्रः सावित्रीराहवनीये जुहोति । देवसवितः । तत्सवितुर्वरेण्यम् । विश्वानि देवसवितरिति । तत्र द्वे व्याख्याते ॥ १ ॥ २ ॥

**म०** इतउत्तरं पुरुषमेधः । द्वावध्यायौ नारायणः पुरुषोऽपश्यत् । ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसंज्ञको यज्ञो भवति । सर्वभूतान्यतिक्रम्य स्थानमतिष्ठा । चैत्रशुक्लदशम्यामारम्भः । अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्च सुत्या इति चत्वारिंशद्दिनैः सिध्यति । अत्र यूपैकादशिनी भवति एकादशाग्नीषोमीयाः पशवो भवन्ति तेषां च प्रतियूपं मध्यमे वा यूपे यथेच्छं नियोजनम् । आज्येन सकृद्गृहीतेन देव सवितरिति प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति । तत्र देव सवितः ( ११ । ७ ) तत्सवितुः ( ३ । ३५ ) द्वे व्याख्याते ॥ १ ॥ २ ॥

विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑सुव । यद्भ॒द्रं तन्न॒ आसु॑व ॥ ३ ॥

[ विश्वा॑नि । दे॒व॒ । स॒वि॒त॒रिति॑ । दु॒रि॒तानीति॑ दुः॒ऽइ॒तानि॑ । परा॑ । सु॒व॒ ॥ यत् । भ॒द्रम् । तत् । नः॒ । आ । सु॒व॒ ॥३॥ ]

हे सवितादेव ! तुम हमसे समस्त दुर्गुणों को दूर करो । जो शुभ गुण हैं, वे हमें प्राप्त कराओ ॥ ३ ॥

**उ०** विश्वानि देव सवितरिति द्वे गायत्र्यौ । विश्वानि सर्वाणि हे देवसवितः, दुरितानि असत्यानि । परासुव पराञ्चि गमय । यच्च भद्रं भन्दनीयं तत् नः अस्माकम् । आसुव आगमय ॥ ३ ॥

**म०** हे देव सवितः, विश्वानि सर्वाणि दुरितानि पापानि परासुव दूरे गमय । यद्भद्रं कल्याणं तन्नोऽस्मान् प्रति आसुव आगमय ॥ ३ ॥

वि॒भ॒क्तार॑ꣳ हवामहे॒ वसो॑श्चि॒त्रस्य॒ राध॑सः । स॒वि॒तार॑ं नृ॒चक्ष॑सम् ॥ ४ ॥

[ वि॒भ॒क्तार॒मिति॑ वि॒ऽभ॒क्तार॑म् । ह॒वा॒म॒हे॒ । वसोः॑ । चि॒त्रस्य॑ । राध॑सः ॥ स॒वि॒तार॑म् । नृ॒चक्ष॑स॒मिति॑ नृ॒ऽचक्ष॑सम् ॥४॥ ]

विचित्र धन के देने वाले तथा मनुष्यों को यथार्थ रूप में देखने वाले सविता देव का हम आह्वान करते हैं ॥ ४ ॥

**उ०** विभक्तारं कर्मानुरूपेण विभक्तारम् । हवामहे आह्वयामः । वसोः वासयितुः । चित्रस्य चायनीयस्य । राधसः धनस्य आयुषश्च । सवितारम् नृचक्षसम् नृणां द्रष्टारम् । ये नरो यथा द्रष्टव्यास्तांस्तथा पश्यति ॥ ४ ॥

---

१ इत उत्तरमाध्यायान्तमौवटभाष्यं नोपलब्धमिति महीधरीयमेकमेव संगृहीतम् ।

**म०** वयं सवितारं हवामहे आह्वयामः। किंभूतम्। वसोः वासयितुश्चित्रस्य नानाविधस्य राधसः धनस्य विभक्तारं विभज्य दातारम्। नृचक्षसं नृणां द्रष्टारं यथायोग्यम् ॥ ४ ॥

ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणं पाप्मने क्लीबमाक्रयाया अयोगूं कामाय पुंश्चलूमतिक्रुष्टाय मागधम् ॥ ५ ॥

[ ब्रह्मणे। ब्राह्मणम्। क्षत्राय। राजन्यम्। मरुद्भ्य इतिमरुत् भ्यः। वैश्यम्। तपसे। शूद्रम्। तमसे। तस्करम्। नारकाय। वीरहणम्। वीरहनमितिवीर हनम्। पाप्मने। क्लीबम्। आक्रयाया इत्या क्रयायै। अयोगूम्। कामाय। पुंश्चलूम्। अतिक्रुष्टायेत्यति क्रुष्टाय मागधम् ॥५॥ ]

( इसके आगे पुरुषमेध याग के पुरुषों का यूपों में बाँधना कहा जा रहा है। इस पुरुषमेध याग में ग्यारह यूप गाड़े जाते हैं। प्रथम यूप में अड़तालीस तथा शेष यूपों में ग्यारह-ग्यारह मनुष्य बाँधे जाते हैं। ) ब्रह्मा के लिए प्रिय ब्राह्मण को, क्षत्रिय के लिए क्षत्रिय को, मरुतों के लिए वैश्य को, तपस् के लिए शूद्र को, अन्धकार के लिए तस्कर को, नरक के लिए नष्टाग्नि को, पाप के लिए नपुंसक को, आक्रय के लिए अयोगू को, काम के लिए व्यभिचारी को और अतिक्रुष्ट के लिए मागध को बाँधता हूँ ॥ ५ ॥

**म०** अतः परं पुरुषमेधकाः पशवः आ अध्यायसमाप्तेः। ततः प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टचत्वारिंशत्संख्यान् पुरुषान् प्रकामोद्याय सदमित्यन्तानग्निष्ठे यूपे नियुनक्ति इतरेषु यूपेष्वेकादशैकादश पुरुषान् वर्णायानुरुधमित्यादीन्नियुनक्ति। ब्रह्मणे ब्राह्मणम् तत्र ब्रह्मणे जुष्टं नियुनज्मीति अग्निष्ठे ब्राह्मणं प्रथमं नियुनक्ति। एवमग्रे सर्वेषां यूपे एव बन्धनम् चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम्। क्षत्राय राजन्यं क्षत्रियम् २ मरुद्भ्यो वैश्यम् ६ तपसे शूद्रम् ४ तपसे तस्करं स्तेनम् ५ नारकाय वीरहणं नष्टाग्निं शूरं वा ६ पाप्मने क्लीबं नपुंसकम् ७ आक्रयायै अयोगूमयसो गन्तारम् ८ कामाय पुंश्चलूं व्यभिचारिणीम् ९ अतिक्रुष्टाय मागधं मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा १० ॥ ५ ॥

नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलं नर्माय रेभꣳ हसाय कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम् ॥ ६ ॥

[ नृत्ताय। सूतम्। गीताय। शैलूषम्। धर्माय। सभाचरमितिसभा चरम्। नरिष्ठायै। भीमलम्। नर्माय। रेभम्। हसाय। कारिम्। आनन्दायेत्या नन्दाय। स्त्रीषखम्। स्त्रीसखमितिस्त्री सखम्। प्रमदइतिप्र मदे। कुमारीपुत्रमितिकुमारी पुत्रम्। मेधायै। रथकारमितिरथ कारम्। धैर्याय। तक्षाणम् ॥६॥ ]

नृत्त के लिए सूत को, गीत के लिए शैलूष को, धर्म के लिए सभाचारी को, नरिष्ठा के लिए भील को, नर्म के लिए रेभ को, हंस के लिए टहलुआ को, आनन्द के लिए स्त्रीमित्र को, प्रमद के लिए कुमारीपुत्र को, मेधा के लिए रथकार को और धैर्य के लिए तक्षा को बाँधता हूँ ॥ ६ ॥

**म०** नृत्ताय सूतं ब्राह्मण्यां क्षत्रियाज्जातः सूतः ११ गीताय शैलूषं नटम् १२ धर्माय सभाचरं सभायां चरतीति तम् १३ नरिष्ठायै भीमलं भयङ्करम् १४ नर्माय रेभं शब्दकर्तारं वाचाटम् १५ हसाय कारिं करणविशिष्टम् १६ आनन्दाय स्त्रीषखं स्त्रियाः सखायम् १७ प्रमदे कुमारीपुत्रं कानीयम् १८ मेधायै रथकारं माहिष्येण कारण्यां जातम् १९ धैर्याय तक्षाणं सूत्रधारम् २० ॥ ६ ॥

तपसे कौलालं मायायै कर्मारꣳ रूपाय मणिकारꣳ शुभे वपꣳ शरव्याया इषुकारꣳ हेत्यै धनुष्कारं कर्मणे ज्याकारं दिष्टाय रज्जुसर्जं मृत्यवे मृगयुमन्तकाय श्वनिनम् ॥ ७ ॥

[ तपसे। कौलालम्। मायायै। कर्मारम्। रूपाय। मणिकारमितिमणि कारम्। शुभे। वपम्। शरव्यायै। इषुकारमितीषु कारम्। हेत्यै। धनुष्कारम्। धनुष्कारमितिधनुः कारम्। कर्मणे। ज्याकारमितिज्या कारम्। दिष्टाय। रज्जुसर्जमितिरज्जु सर्जम्। मृत्यवे। मृगयुमितिमृग युम्। अन्तकाय। श्वनिनमितिश्व निनम् ॥७॥ ]

तप के लिए कुलाल को; माया के लिए लोहार को, रूप के लिए मणिकार को, शुभ के लिए बीज बोने वाले को, शरव्या के लिए बाणकार को, हेति के लिए धनुष बनाने वाले को, कर्म के लिए ज्या-निर्माता को, दिष्ट के लिए रज्जुकार को, मृत्यु के लिए व्याध को और यम के लिए कुत्तों के द्वारा शिकार पकड़ने वाले को बाँधे ॥ ७ ॥

**म०** तपसे कौलालं कुलालापत्यम् २१ मायायै कर्मारं लोहकारम् २२ रूपाक्रमणिकारं रत्नकर्तारम् २३ शुभे शुभाय वपं बीजवप्तारम् २४ शरव्यायै इषुकारं बाणकर्तारम् २५ हेत्यै धनुष्कारं चापकारिणम् २६ कर्मणे ज्याकारं प्रत्यञ्चनकर्तारम् २७ दिष्टाय रज्जुसर्जं रज्जोः स्रष्टारं निर्मातारम् २८ मृत्यवे मृगयुं मृगग्राहम् २९ अन्तकाय श्वनिनं शुनो नेतारम् ३० ॥ ७ ॥

नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादं पुरुष-

व्याघ्राय दुर्मदं गन्धर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्य उन्मत्तꣳ सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यताया अकितवं पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम् ॥ ८ ॥

[ नदीभ्य॒ इति॑ । पौञ्जिष्ठम् । ऋक्षीकाभ्य॒: । नैषादम् । नैषादमिति॒ नैषादम् । पुरुषव्याघ्रायेति॑ पुरुष व्याघ्राय । दुर्मदमिति॑ दुः मदम् । गन्धर्वाप्सरोभ्य॒ऽइति॑ गन्धर्वाप्सरः भ्य॒: । व्रात्यम् । प्रयुग्भ्य॒ऽइति॑ प्रयुक् भ्य॒: । उन्मत्तमित्युत् मत्तम् । सर्पदेवजनेभ्य॒ऽइति॑ सर्प देवजनेभ्य॒: । अप्रतिपदमित्यप्रति पदम् । अयेभ्य॒: । कितवम् । ईर्यतायै । अकितवम् । पिशाचेभ्य॒: । विदलकारीमिति॑ विदल कारीम् । यातुधानेभ्य॒ऽइति॑ यातु धानेभ्य॒: । कण्टकीकारीमिति॑ कण्टकी कारीम् ॥८॥ ]

नदियों के लिए पुल्कस के पुत्र को, रीछों के लिए निषाद को, पुरुषव्याघ्र के लिए उन्मत्त को, गन्धर्व-अप्सराओं के लिए व्रात्य को, प्रयुगों के लिए उन्मत्त को, सर्पों के लिए पंगु को, अयों के लिए कितव को, ईर्यता के लिए अकितव को, पिशाचों के लिए विदलकारी को और यातुधानों के लिए कण्टकीकारी को बाँधता हूँ ॥८॥

**म०** नदीभ्यः पौञ्जिष्ठं पुञ्जिष्ठोऽन्त्यजः पुल्कसस्तदपत्यम् ३१ ऋक्षीकाभ्यो नैषादं निषादपुत्रम् ३२ पुरुषव्याघ्राय दुर्मदमुन्मत्तम् ३३ गन्धर्वाप्सरोभ्यो व्रात्यं सावित्रीपतितम् ३४ प्रयुग्भ्यः उन्मत्तम् ३५ सर्पदेवजनेभ्यः अप्रतिपदं प्रतिपद्यते जातानीति प्रतिपत् अतथाविधं विकलमित्यर्थः ३६ अयेभ्यः कितवं द्यूतकारम् ३७ ईर्यतायै अकितवमद्यूतकृतम् ३८ पिशाचेभ्यः विदलकारीं वंशविदारिणीं वंशपात्रकारिणीम् ३९ यातुधानेभ्यः कण्टकीकारीं कण्टकी कर्म तत्कारिणीम् ४० ॥ ८ ॥

सन्धये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराध्या एदिधिषुःपतिं निष्कृत्यै पेशस्कारीꣳ संज्ञानाय स्मरकारीं प्रकामोद्यायोपसदं वर्णायानुरुधं बलायोपदाम् ॥ ९ ॥

[ सन्धय॒ऽइति॑ सम् धये॑ । जारम् । गेहाय॑ । उपपतिमित्युप पतिम् । आर्त्या॒ऽइत्या ऋत्यै । परिवित्तमिति॒ परि वित्तम् । निर्ऋत्या॒ऽइति॑ निः ऋत्यै । परिविविदानमिति॑ परि विविदानम् । अराद्ध्यै । एदिधिषुःपतिमित्येदिधिषुः पतिम् । निष्कृत्यै । निःकृत्या॒ऽइति॑ निः कृत्यै । पेशस्कारीम् । पेशःकारीमिति॑ पेशः कारीम् । सञ्ज्ञानायेति॑ सम् ज्ञानाय । स्मरकारीमिति॑ स्मर कारीम् । प्रकामोद्यायेति॑ प्रकाम उद्याय । उपसदमित्युप सदम् । वर्णाय । अनुरुधमित्यनु रुधम् । बलाय । उपदामित्युप दाम् ॥९॥ ]

सन्धा के लिए जार को, गेहा के लिए उपपति को, आर्ति के लिए परिवित्त को, निर्ऋति के लिए बड़े के न विवाहे जाने पर भी विवाह कर लेने वाले छोटे को, अपराध्या के लिए अविवाहित बड़ी कन्या को छोड़कर छोटी विवाहिता के पति को, निष्कृति के लिए रूपकारी को, संज्ञान के लिए स्मरकारी को, प्रकामोद्य के लिए उपसद को ( इतने पुरुषों को अग्निष्ट यूप में बाँधे। दूसरे यूप में— ), वर्ण के लिए अनुरुध को तथा बल के लिए उपदा को बाँधे ॥ ९ ॥

**म०** सन्धये जारमुपपतिम् ४१ गेहाय उपपतिं व्यभिचारिणम् ४२ आर्त्यै परिवित्तम् ऊढे कनिष्ठेऽनूढम् ४३ निर्ऋत्यै परिविविदानम् अनूढे ज्येष्ठे ऊढवन्तम् ४४ आराध्यै देव्यै एदिधिषुःपतिम् ज्येष्ठायां पुत्र्यामनूढायामूढा एदिधिषुः तत्पतिम् ४५ निष्कृत्यै पेशस्कारीं रूपकर्त्रीम् ४६ संज्ञानाय स्मरकारीं कामदीप्तिकरीम् ४७ प्रकामोद्याय तत्संज्ञाय देवाय उपसीदतीत्युपसत् समीपस्थितस्तम् ४८ एतानग्निष्टे नियुनक्ति। अथ द्वितीये यूपे । वर्णाय अनुरुधम् अनुरुध्यतेऽनुसरतीत्यनुरुत् तम् १ बलाय उपदाम् उपददातीत्युपदास्तमुपायनदातारम् २ ॥ ९ ॥

उत्सादेभ्यः कुब्जं प्रमुदे वामनं द्वार्भ्यः स्रामꣳ स्वप्नायान्धमधर्माय बधिरं पवित्राय भिषजं प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्यादायै प्रश्नविवाकम् ॥ १० ॥

[ उत्सादेभ्य॒ऽइत्युत् सादेभ्य॒: । कुब्जम् । प्रमुद॒ऽइति॑ प्र मुदे॑ । वामनम् । द्वार्भ्य॒ऽइति॑ द्वाः भ्य॒: । स्रामम् । स्वप्नाय । अन्धम् । अधर्माय । बधिरम् । पवित्राय । भिषजम् । प्रज्ञानायेति॑ प्र ज्ञानाय । नक्षत्रदर्शमिति॑ नक्षत्र दर्शम् । आशिक्षाया॒ऽइत्या शिक्षायै । प्रश्निनम् । उपशिक्षाया॒ऽइत्युप शिक्षायै । अभिप्रश्निनमित्यभि प्रश्निनम् । मर्यादायै । प्रश्नविवाकमिति॑ प्रश्न विवाकम् ॥१०॥ ]

उत्सादों के लिए कुब्जे को, प्रमुद के लिए वामन को, द्वारों के लिए स्राम को, स्वप्न के लिए अन्ध को, अधर्म के लिए बधिर को, पवित्र के लिए वैद्य को, प्रज्ञान के लिए ज्योतिषी को, आशिक्षा के लिए शकुनादि पूछने वाले को, उपशिक्षा के लिए अभिप्रश्नकर्त्ता को और मर्यादा के लिए प्रश्नवक्ता को बाँधना चाहिए ॥ १० ॥

**म०** उत्सादेभ्यः कुब्जं वक्राङ्गम् ३ प्रमुदे वामनं ह्रस्वाङ्गम् ४ द्वार्भ्यः स्रामं सर्वदा जलक्लिन्ननेत्रम् ५ स्वप्नाय अन्धं नेत्रहीनम् ६ अधर्माय बधिरं कर्णेन्द्रियहीनम् ७ पवित्राय

भिषजं वैद्यम् ८ प्रज्ञानाय नक्षत्रदर्शं नक्षत्राणि दर्शयति तं गणकम् ९ आशिक्षायै प्रश्निनं प्रश्नवन्तम्। शकुनादिप्रष्टारमित्यर्थः १० उपशिक्षायै अभिप्रश्निनमभिप्रश्नवन्तम् ११ अथ तृतीये यूपे। मर्यादायै प्रश्नविवाकं कृतान्प्रश्नान्यो विविनक्ति ब्रूते स प्रश्नविवाकस्तम् १ ॥ १० ॥

**अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्याायाविपालं तेजसेऽजपालमिरायै कीनाशं कीलालाय सुराकारं भद्राय गृहपᳪ श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम् ॥ ११ ॥**

[ अर्मेभ्यः । हस्तिपमिति हस्ति पम् । जवाय । अश्वपमित्यश्व पम् । पुष्ट्यै । गोपालमिति गो पालम् । वीर्याय । अविपालमित्यवि पालम् । तेजसे । अजपालमित्यज पालम् । इरायै । कीनाशम् । कीलालाय । सुराकारमिति सुरा कारम् । भद्राय । गृहपमिति गृह पम् । श्रेयसे । वित्तधमिति वित्त धम् । आध्यक्ष्यायेत्याधि अक्ष्याय । अनुक्षत्तारमित्यनु क्षत्तारम् ॥११॥ ]

अर्मों के लिए हस्तिपाल को, जव के लिए अश्वपाल को, पुष्टि के लिए गोपाल को, वीर्य के लिए अविपाल को, तेज के लिए अजपाल को, इरा के लिए कीनाश को, कीलाल के लिए सुराकार को, भद्र के लिए गृहपाल को, श्रेयस् के लिए महाजन को और आध्यक्ष्या के लिए अनुक्षत्ता को बाँधे ॥ ११ ॥

**म०** अर्मेभ्यो हस्तिपं गजपालकम् २ जवाय अश्वपं तुरगपालकम् ३ पुष्ट्यै गोपालं धेनुपालकम् ४ वीर्याय अविपालम् ५ तेजसे अजपालम् ६ इरायै कीनाशं कर्षुकम्। 'कीनाशः कर्षुके यमे' ७ कीलालाय सुराकारं मद्यकृतम् ८ भद्राय गृहपं गेहपालकम् ९ श्रेयसे वित्तधं वित्तं दधातीति वित्तधस्तं धनकर्तारम् १० आध्यक्ष्याय अनुक्षत्तारं सारथ्यनुसारिणम् ११ ॥ ११ ॥

**भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारᳪ सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायोपमन्थितारं मेधाय वासःपल्पूलीं प्रकामाय रजयित्रीम् ॥ १२ ॥**

[ भायै । दार्वाहारमिति दारु आहारम् । प्रभाया इति प्र भायै । अग्न्येधमित्यग्नि एधम् । ब्रध्नस्य । विष्टपाय । अभिषेक्तारम् । अभिसेक्तारमित्यभि सेक्तारम् । वर्षिष्ठाय । नाकाय । परिवेष्टारमिति परि वेष्टारम् । देवलोकायेति देव लोकाय । पेशितारम् । मनुष्यलोकायेति मनुष्य लोकाय । प्रकरितारमिति प्र करितारम् । सर्वेभ्यः । लोकेभ्यः । उपसेक्तारमित्युप सेक्तारम् । अवऋत्या इत्यव ऋत्यै । वधाय । उपमन्थितारमित्युप मन्थितारम् । मेधाय । वासःपल्पूलीमिति वासः पल्पूलीम् । प्रकामायेति प्र कामाय । रजयित्रीम् ॥१२॥ ]

माया के लिए लकड़हारे को, प्रभा के लिए अग्निवर्धक को, सूर्यलोक के लिए अभिषेक्ता को, श्रेष्ठ स्वर्ग के लिए परिवेषणकर्त्ता को, देवलोक के लिए पेशिता को, मनुष्य लोक के प्रकरिता को, सभी लोकों के लिए उपसेक्ता को, अवऋतिवध के लिए उपमन्थिता को, मेधा के लिए धोबी को तथा प्रकाम के लिए रंगरेजिन को बाँधे ॥ १२ ॥

**म०** अथ चतुर्थे यूपे। भायै दार्वाहारं काष्ठानामाहर्तारम् १ प्रभायै अग्न्येधम् अग्निमेधयतीति तमग्नेर्वर्धकम् २ ब्रध्नस्य विष्टपाय सूर्यलोकाय अभिषेक्तारम् ३ वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्तारम् ४ देवलोकाय पेशितारम् 'पिश अवयवे' पिंशतीति पेशिता तम् प्रतिमाद्यवयवकर्तारम् ५ मनुष्यलोकाय प्रकरितारम् 'कॄ विक्षेपे' विक्षेप्तारम् ६ सर्वेभ्यो लोकेभ्यः उपसेक्तारमुपसेचनकर्तारम् ७ अवऋत्यै वधाय उपमन्थितारमुपमन्थनकर्तारम् ८ मेधाय वासःपल्पूलीम् वाससां प्रक्षालनकर्तारम् 'पल्पूल प्रक्षालनच्छेदनयोः' ९ प्रकामाय रजयित्रीं वस्त्राणां रञ्जकारीणीं नारीम् १० ॥ १२ ॥

**ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दं प्रियाय प्रियवादिनमरिष्ट्या अश्वसादᳪ स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥ १३ ॥**

[ ऋतये । स्तेनहृदयमिति स्तेन हृदयम् । वैरहत्यायेति वैर हत्याय । पिशुनम् । विविक्त्या इति वि विक्त्यै । क्षत्तारम् । औपद्रष्ट्र्यायेत्यौप द्रष्ट्र्याय । अनुक्षत्तारमित्यनु क्षत्तारम् । बलाय । अनुचरमित्यनु चरम् । भूम्ने । परिष्कन्दम् । परिस्कन्दमिति परि स्कन्दम् । प्रियाय । प्रियवादिनमिति प्रिय वादिनम् । अरिष्ट्यै । अश्वसादमित्यश्व सादम् । स्वर्गायेति स्वः गाय । लोकाय । भागदुघमिति भाग दुघम् ॥१३॥ ]

ऋति के लिए स्तेनहृदय को, वैरहत्या के लिए पिशुन को, विविक्ति के लिए क्षत्ता को, औपद्रष्ट्या के लिए अनुक्षत्ता को, बल के लिए अनुचर को, भूम्ना के लिए परिष्कन्द को, प्रिय के लिए प्रियवादी को, अरिष्टि के लिए अश्ववार को, स्वर्गलोक के लिए भागदुघ को और श्रेष्ठ नाक के लिए परिवेष्टा को बाँधे ॥१३॥

म० ऋतये स्तेनहृदयं स्तेनस्येव हृदयं यस्य तम् ११ अथ पञ्चमे यूपे। वैरहत्याय पिशुनं परवृत्तसूचकम् १ विविक्त्यै क्षत्तारं प्रतीहारम् २ औपद्रष्ट्याय अनुक्षत्तारं प्रतिहारसेवकम् ३ बलाय अनुचरं सेवकम् ४ भूम्ने परिष्कन्दम् परितः स्कन्दति रेतः सिञ्चति तम् ५ प्रियाय प्रियवादिनं मधुरभाषिणम् ६ अरिष्ट्यै अश्वसादम् अश्वारोहम् ७ स्वर्गाय लोकाय भागदुघम् भागं दुग्धे भागदुघस्तम् विभागप्रदम् ८ वर्षिष्ठायनकाय परिवेष्टारम् ९ ॥ १३ ॥

मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारᳪं शोकायाभिसर्त्तारं क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनं वपुषे मानस्कृतᳪं शीलायाञ्जनीकारीं निर्ऋत्यै कोशकारीं यमायासूम् ॥ १४ ॥

[ मन्यवे । अयस्तापमित्ययःऽ तापम् । क्रोधाय । निसरमितिनि सरम् । योगाय । योक्तारम् । शोकाय । अभिसर्त्तारमित्यभि सर्त्तारम् । क्षेमाय । विमोक्तारमितिवि मोक्तारम् । उत्कूलनिकूलेभ्यऽइत्युत्कूल निकूलेभ्यः । त्रिष्ठिनम् । त्रिस्थिनमितित्रि स्थिनम् । वपुषे । मानस्कृतम् । मानःकृतमितिमानः कृतम् । शीलाय । आञ्जनीकारीमित्याञ्जनी कारीम् । निर्ऋत्याऽइतिनिः ऋत्यै । कोशकारीमितिकोश कारीम् । यमाय । असूम् ॥१४॥ ]

मन्यु के लिए लोहतापक को, क्रोध के लिए निसर को, योग के लिए योगी को, शोक के लिए अभिसर्ता को, क्षेम के लिए विमोक्ता को, उत्कूलनिकूलों के लिए शीतवान् को, वपुष् के लिए मानकारी को, शील के लिए काजल बनाने वाली को, निर्ऋति के लिए कोशकारिणी को तथा यम के लिए वन्ध्या को बाँधे ॥ १४ ॥

म० मन्यवे अयस्तापमयस्तपं लोहतापकम् १० क्रोधाय निसरं नितरां सर्तारम् ११ । अथ षष्ठे यूपे। योगाय योक्तारं योगकर्तारम् १ शोकाय अभिसर्तारं संमुखमागच्छन्तम् २ क्षेमाय विमोक्तारं विमोचनकरम् ३ उत्कूलनिकूलेभ्यः त्रिष्ठिनम् त्रिषु तिष्ठतीति तिष्ठी तम् विद्यादिषु स्थितं शीलवन्तमित्यर्थः ४ वपुषे मानस्कृतं पूजाया अभिमानस्य वा कर्तारम् । सक् छान्दसः ५ शीलाय आञ्जनीकारीम् अञ्जनविद्याकर्त्रीम् ६ निर्ऋत्यै कोशकारीं खड्गाद्यावरणं कोशस्तत्कारिणीं स्त्रियम् ७ यमाय असूम् न सूते सा असूः ताम् वन्ध्याम् ८ ॥ १४ ॥

यमाय यमसूमथर्वभ्योऽवतोकाᳪं संवत्सराय पर्यायिणीं परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विजर्जराᳪं संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धᳪं साध्येभ्यश्चर्म्मम्नम् ॥ १५ ॥

[ यमाय । यमसूमितियम सूम् । अथर्वभ्यऽइत्यथर्व भ्यः । अवतोकामित्यव तोकाम् । संवत्सराय । पर्यायिणीम् । पर्यायिणीमितिपरि आयिनीम् । परिवत्सरायेतिपरि वत्सराय । अविजातामित्यवि जाताम् । इदावत्सराय । अतीत्वरीमित्यति इत्वरीम् । इद्वत्सरायेतीत् वत्सराय । अतिष्कद्वरीम् । अतिस्कद्वरीमित्यति स्कद्वरीम् । वत्सराय । विजर्जरामितिवि जर्जराम् । संवत्सराय । पलिक्नीम् । ऋभुभ्यऽइत्यृभु भ्यः । अजिनसन्धमित्यजिन सन्धम् । साध्येभ्यः । चर्म्मम्नमितिचर्म्म म्नम् ॥१५॥ ]

यम के लिए जुड़वा पैदा करने वाली को, अथर्वों के लिए अवतोका को, संवत्सर के लिए पर्यायिणी को, परिवत्सर के लिए अविजाता को, इदावत्सर के लिए कुलटा को, इदवत्सर के लिए प्रदररोगिणी को, वत्सर के लिए ढीले अंग वाली को, संवत्सर के लिए श्वेतकेशा को, ऋभुओं के लिए चर्मकार को और साध्यों के लिए मोची को बाँधे ॥ १५ ॥

म० यमाय यमसूं युग्मप्रसवित्रीम् ९ अथर्वभ्योऽवतोकां निरपत्याम् १० संवत्सराय पर्यायिणीम् पर्यायोऽनुक्रमस्तद्वतीमनुक्रमप्रज्ञाम् ११ । अथ सप्तमे यूपे। परिवत्सराय अविजाताम् अप्रसूताम् १ इदावत्सराय अतीत्वरीमत्यन्तं कुलटाम् 'पुंश्चली कुलटेत्वरी' २ इद्वत्सराय अतिष्कद्वरीम् अतिस्कन्दति स्रवति इत्यतिस्कद्वरी । स्कन्देर्वनन्तात् ङीब्रेफौ ३ वत्सराय विजर्जरां शिथिलशरीराम् ४ संवत्सराय पलिक्नीं श्वेतकेशाम् ५ ऋभुभ्यः अजिनसन्धं चर्मसन्धातारम् ६ साध्येभ्यः चर्मम्नं चर्माभ्यासकरम् ७ ॥ १५ ॥

सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो बैन्दं नड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय कैवर्तं तीर्थेभ्य आन्दं विषमेभ्यो मैनालᳪं स्वनेभ्यः पर्णकं गुहाभ्यः किरातᳪं सानुभ्यो जम्भकं पर्वतेभ्यः किंपूरुषम् ॥ १६ ॥

[ सरोभ्यऽइतिसरः भ्यः । धैवरम् । उपस्थावराभ्यऽइत्युप स्थावराभ्यः । दाशम् । वैशन्ताभ्यः । बैन्दम् । नड्वलाभ्यः । शौष्कलम् । पाराय । मार्गारम् । अवाराय । कैवर्त्तम् । तीर्थेभ्यः । आन्दम् । विषमेभ्यः । विषमेभ्यऽइतिवि समेभ्यः । मैनालम् । स्वनेभ्यः । पर्णकम् । गुहाभ्यः । किरातम् । सानुभ्यऽइतिसानु भ्यः । जम्भकम् । पर्वतेभ्यः । किम्पूरुषम् । किम्पुरुषमितिकिम् पुरुषम् ॥१६॥ ]

सरों के लिए धीवर को, उपस्थावरों के लिए दाश को, वैशन्तों के लिए वैन्द को, नड्वलों के लिए मत्स्यजीवी को, पार के लिए मार्गारि को, अवार के लिए कैवर्त को, तीर्थों के लिए आन्द को, विषमों के लिए मैनाल को, स्वनों के लिए पर्णक को, गुहाओं के लिए किरात को, सानुओं के लिए जम्भक को और पर्वतों के लिए किम्पुरुष को बाँधे ॥ १६ ॥

**म०** सरोभ्यो धैवरं कैवर्तापत्यम् ८ उपस्थावराभ्यः दाशम् 'दाश्र दाने' दातारम् । दाशो धीवरो वा ९ वैशन्ताभ्यो वैन्दं विन्दो निषादापत्यम् १० नड्वलाभ्यः शौष्कलं मत्स्यजीविनम् शुष्कला मत्स्यास्तैर्जीवति तम् ११ । अथाष्टमे यूपे । पाराय मार्गारम् मृगारेरपत्यं मार्गारस्तम् १ अवाराय कैवर्तम् २ तीर्थेभ्यः आन्दम् 'अदि बन्धने' अदति आन्दस्तं बन्धनकर्तारम् ३ विषमेभ्यो मैनालम् 'अल् वारणे' मीनानलति वारयति जालैरसौ मीनालस्तदपत्यम् ४ स्वनेभ्यः पर्णकं भिल्लम् ५ गुहाभ्यः किरातम् ६ सानुभ्यः जम्भकं 'जभि नाशने' जम्भयतीति तत् हिंसकम् ७ पर्वतेभ्यः किंपूरुषं कुत्सितनरम् ८ ॥ १६ ॥

बीभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चादोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलं भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या अपगल्भꣳ सꣳशराय प्रच्छिदम् ॥ १७ ॥

[ बीभत्सायै । पौल्कसम् । वर्णाय । हिरण्यकारमितिहिरण्य कारम् । तुलायै । वाणिजम् । पश्चादोषायेतिपश्चा दोषाय । ग्लाविनम् । विश्वेभ्यः । भूतेभ्यः । सिध्मलम् । भूत्यै । जागरणम् । अभूत्यै । स्वपनम् । आर्त्याऽइत्या ऋत्यै । जनवादिनमितिजन वादिनम् । व्यृद्ध्याऽइतिवि ऋद्ध्यै । अपगल्भमित्यप गल्भम् । सꣳशरायेतिसम् शराय । प्रच्छिदमितिप्र छिदम् ॥१७॥ ]

बीभत्स के लिए पौल्कस को, वर्ण के लिए सुनार को, तुला के लिए वणिक् को, पश्चादोष के लिए ग्लावी को, सर्वभूतों के लिए सिध्मल को, भूति के लिए जागरण को, अभूति के लिए शयन को, आर्ति के लिए जनवादी को, व्यृद्धि के लिए अपगल्भ को तथा सशर के लिए प्रच्छिद को बाँधे ॥ १७ ॥

**म०** बीभत्सायै पौल्कसं पुल्कसापत्यम् ९ वर्णाय हिरण्यकारं स्वर्णनिष्पादकम् १० तुलायै वाणिजं वणिगपत्यम् ११ । अथ नवमे यूपे । पश्चादोषाय ग्लाविनं 'ग्लै हर्षक्षये' अहृष्टम् १ विश्वेभ्यो भूतेभ्यः सिध्मलं सिध्माख्यरोगवन्तम् २ भूत्यै जागरणं जागरूकम् ३ अभूत्यै स्वपनं शयालुम् ४ आर्त्यै जनवादिनं जनान् वदति तम् ५ व्यृद्ध्यै अपगल्भम् ६ संशराय प्रच्छिदं प्रच्छेदनकर्तारम् ७ ॥ १७ ॥

अक्षराजाय कितवं कृताया दिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम् ॥ १८ ॥

[ अक्षराजायेत्यक्ष राजाय । कितवम् । कृताय । आदिनवदर्शमित्यादिनव दर्शम् । त्रेतायै । कल्पिनम् । द्वापराय । अधिकल्पिनमित्यधि कल्पिनम् । आस्कन्दायेत्या स्कन्दाय । सभास्थाणुमितिसभा स्थाणुम् । मृत्यवे । गोव्यच्छमितिगो व्यच्छम् । अन्तकाय । गोघातमितिगो घातम् । क्षुधे । यः । गाम् । विकृन्तन्तमितिवि कृन्तन्तम् । भिक्षमाणः । उपतिष्ठतीत्युप तिष्ठति । दुष्कृतायेतिदुः कृताय । चरकाचार्य्यमितिचरक आचार्य्यम् । पाप्मने । सैलगम् ॥१८॥ ]

अक्षराज के लिए कितव को, कृत के लिए आदिनवदर्श को, त्रेता के लिए कल्पक को, द्वापर के लिए अधिकल्पी को, आस्कन्द के लिए सभास्थाणु को, मृत्यु के लिए गोव्यच्छ को, अन्तक के लिए गोघाती को, क्षुधा के लिए गोमांसयाचक को, दुष्कृत के लिए चरकों के गुरु को तथा पाप के लिए सैलग को बाँधे ॥ १८ ॥

**म०** अक्षराजाय कितवं धूर्तम् ८ कृताय आदिनवदर्शम् आदीनवो दोषस्तं पश्यति तथाभूतम् ९ त्रेतायै कल्पिनं कल्पकम् १० द्वापराय अधिकल्पिनम् अधिकल्पनाकर्तारम् ११ । अथ दशमे यूपे । आस्कन्दाय सभास्थाणुं सभायां स्थिरम् १ मृत्यवे गोव्यच्छं गाः प्रति गमनशीलम् २ अन्तकाय गोघातं गवां हन्तारम् ३ क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति यः पुमान् गां विकृन्तन्तं छिन्दन्तम् । भिक्षमाणो याचमानः उपतिष्ठते तं याचितारं क्षुधे देव्यै आलमेत ४ दुष्कृताय चरकाचार्यं चरकाणां गुरुम् ५ पाप्मने सैलगं सीलगो दुष्टस्तदपत्यम् ६ ॥ १८ ॥

प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम् ॥ १९ ॥

[ प्रतिश्रुत्काया ऽइतिप्रति श्रुत्कायै । अर्तनम् । घोषाय । भषम् । अन्ताय । बहुवादिनमितिबहु वादिनम् । अनन्ताय । मूकम् । शब्दाय । आडम्बराघातमित्याडम्बर 'आघातम् । महसे । वीणावादमितिवीणा वादम् । क्रोशाय । तूणवध्म-

मितितूणव ध्मम् । अवरस्पराय । अवरपरायेत्यवर पराय । शङ्खध्ममितिशङ्ख ध्मम् । वनाय । वनपमितिवन पम् । अन्यतोरण्यायेत्यन्यतः अरण्याय । दावपमितिदाव पम् ॥१९॥ ]

प्रतिश्रुत्काय के लिए अर्तन को, घोष के लिए भष को, अन्त के लिए बहुवादी को, अनन्त के लिए मूक को, शब्द के लिए कोलाहलकारी को, महस के लिए वीणावादी को, क्रोश के लिए बाँस बजाने वाले को, अवरस्पर के लिए शंखवादी को, वन के लिए वनपालक को तथा अरण्यशेष के लिए दावपाल को बाँधे ॥ १९ ॥

**म०** प्रतिश्रुत्कायै अर्तनं दुःखिनम् ७ घोषाय भषं जल्पकम् ८ अन्ताय बहुवादिनम् ९ अनन्ताय मूकं वाग्विकलम् १० शब्दाय आडम्बराघातम् आडम्बरमाहन्ति तं कोलाहलकर्तारम् ११ । अथैकादशे यूपे । महसे वीणावादं वीणावादनकर्तारम् १ क्रोशाय तूणवध्मं वाद्यविशेषं धमति तथाभूतम् २ अवरस्पराय शङ्खध्मं शङ्खवादकम् ३ वनाय वनपं वनपालकम् ४ अन्यतोऽरण्याय दावपं वनवह्निपम् ५ ॥ १९ ॥

नर्माय पुंश्चलूँ हसाय कारिं यादसे शाबल्यां ग्रामण्यं गणकमभिक्रोशकं तान्महसे वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्तायानन्दाय तलवम् ॥२०॥

[ नर्म्माय । पुँश्चल्लूम् । हसाय । कारिम् । यादसे । शाबल्याम् । ग्रामण्यम् । ग्रामण्युमितिग्राम न्यम् । गणकम् । अभिक्रोशकमित्यभि क्रोशकम् । तान् । महसे । वीणावादमितिवीणा वादम् । पाणिघ्नमितिपाणि घ्नम् । तूणवध्ममितितूणव ध्मम् । तान् । नृत्ताय । आनन्दायेत्या नन्दाय । तलवम् ॥२०॥ ]

नर्म के लिए व्यभिचारी को, हंस के लिए चाकर को, यादस् के लिए शावली को, ग्रामणी-गणक-अभिक्रोशक को महस् के लिए, वीणावादक-पाणिघ्न-तूणवध्म को नृत्त के लिए तथा आनन्द के लिए तलव को बाँधे ॥ २० ॥

**म०** नर्माय पुंश्चलूं दुष्टां नारीम् ६ हसाय कारिं करणशीलम् ७ यादसे शाबल्याम् शबलः कर्बुरवर्णः तदपत्यभूतां स्त्रियम् ८ ग्रामण्यं ग्रामनेतारम् ९ गणकं ज्योतिर्विदम् १० अभिक्रोशकं निन्दकम् ११ तान् त्रीन्महसे जुष्टं नियुनज्मीति एकादशे यूपे आलभते । एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टास्तान् समासिपर्यन्तान् द्वितीयोच्छ्रिते यूपे नियुनक्ति । तांश्च वीणावादं पाणिघ्नमित्यादीन् रात्र्यै कृष्णं पिङ्गाक्षमित्यन्ताश्चतुर्दश । ततोऽथैतानष्टौ विरूपानित्यष्टौ च मागधादींश्चतुरः एवं षड्विंशतिं द्वितीये । यूपे पूर्वोक्ता एकादश एवं सप्तत्रिंशत् । तानेवाह । वीणावादम् पाणिघ्नं हस्ततालवादकम् तूणवध्मम् तान् त्रीन् नृत्ताय आलभते ३ आनन्दाय तलवम् 'वा गतिगन्धनयोः' गन्धनं हिंसा तलं हस्तादितलं वाति वाद्यमुखं हन्ति स तलवस्तम् वाद्यवादकम् ४ ॥ २० ॥

अग्नये पीवानं पृथिव्यै पीठसर्पिणं वायवे चाण्डालमन्तरिक्षाय वꣳशनर्तिनं दिवे खलतिꣳ सूर्याय हर्यक्षं नक्षत्रेभ्यः किर्मिरं चन्द्रमसे किलासमह्ने शुक्लं पिङ्गाक्षꣳ रात्र्यै कृष्णं पिङ्गाक्षम् ॥ २१ ॥

[ अग्नये । पीवानम् । पृथिव्यै । पीठसर्प्पिणमितिपीठ सर्प्पिणम् । वायवे । चाण्डालम् । अन्तरिक्षाय । वꣳशनर्तिनमितिवꣳश नर्तिनम् । दिवे । खलतिम् । सूर्य्याय । हर्य्यक्षमितिहरि अक्षम् । नक्षत्रेभ्यः । किर्म्मिरम् । चन्द्रमसे । किलासम् । अह्ने । शुक्लम् । पिङ्गाक्षमितिपिङ्ग अक्षम् । रात्र्यै । कृष्णम् । पिङ्गाक्षमितिपिङ्ग अक्षम् ॥२१॥ ]

अग्नि के लिए स्थूल को, पृथ्वी के लिए पंगु को, वायु के लिए चाण्डाल को, अन्तरिक्ष के लिए बाँस पर नाचने वाले को, दिव के लिए गंजे को, सूर्य के लिए हरितनेत्र को, नक्षत्रों के लिए किर्मिर को, चन्द्रमा के लिए किलास को, दिन के लिए शुक्ल वर्ण पिङ्गाक्ष को तथा रात्रि के लिए कृष्ण वर्ण पिङ्गाक्ष को बाँधे ॥ २१ ॥

**म०** अग्नये पीवानं स्थूलम् ५ पृथिव्यै पीठसर्पिणं पीठेनासनेन सर्पति गच्छति पीठसर्पी तं पङ्गुम् ६ वायवे चाण्डालं चण्डालकर्माणम् ७ अन्तरिक्षाय वंशनर्तिनम् वंशेन नर्तनशीलम् ८ दिवे खलतिमलोमशिरस्कं खल्वाटमित्यर्थः ९ सूर्याय हर्यक्षं हरितनेत्रम् १० नक्षत्रेभ्यः किर्मिरं कर्बुरवर्णम् ११ चन्द्रमसे किलासं सिध्मरोगवन्तम् १२ अह्ने शुक्लवर्णं पिङ्गाक्षम् १३ रात्र्यै कृष्णवर्णं पिङ्गाक्षम् १४ ॥ २१ ॥

अथैतानष्टौ विरूपानालभतेऽतिदीर्घं चातिह्रस्वं चातिस्थूलं चातिकृशं चातिशुक्लं चातिकृष्णं चातिकुल्वं चातिलोमशं च । अशूद्रा अब्राह्मणास्ते प्राजापत्याः । मागधः पुंश्चली कितवः क्लीबोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः ॥ २२ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
त्रिंशोऽध्यायः ॥ ३० ॥

[ अर्थ । एतान् । अष्टौ । विरूपानितिवि रूपान् । आ । लभते । अतिदीर्घमित्यति दीर्घम् । च । अतिह्रस्वमित्यति ह्रस्वम् । अतिस्थूलमित्यति स्थूलम् । अतिकृशमित्यति कृशम् । अतिशुक्लमित्यति शुक्लम् । अतिकृष्णमित्यति कृष्णम् । अतिकुल्वमित्यति कुल्वम् । अतिलोमशमित्यति लोमशम् ॥ अशूद्राः । अब्राह्मणाः । ते । प्राजापत्याऽइतिप्राजापत्याः ॥ मागधः । पुंश्चली । कितवः । क्लीवः ॥२२॥ ]

[ ॥ इति वाजसनेयिसंहितापदे त्रिशत्तमोऽध्यायः ॥ ]

अब इन विपरीत स्वरूपों को भी प्राप्त करे—अतिदीर्घ, अतिह्रस्व, अतिस्थूल, अतिकृश, अतिशुक्ल, अतिकृष्ण, बिना रोएँ का व अतिलोमश को। अशूद्र—अब्राह्मण जो हैं, वे प्रजापतिदेवताक हैं। मागध, पुंश्चली, जुँवाड़ी तथा नपुंसक अशूद्र—अब्राह्मण हैं। वे प्रजापतिदेवताक हैं ॥ २२ ॥

इति 'तत्त्वबोधिनी' हिन्दीव्याख्यायां त्रिंशोऽध्यायः ॥ ३० ॥

**म०** तत एतान् वक्ष्यमाणानष्टौ विरूपान् परस्परं विरुद्धरूपान् पशूनालभते । तानाह । अतिदीर्घम् अतिह्रस्वम् अतिस्थूलम् अतिकृशम् अतिशुक्लम् अतिकृष्णम् अतिकुल्वं रोमरहितम् अतिलोमशं सर्वाङ्गव्यापिरोमाणम् । ते अष्टौ अशूद्राः अब्राह्मणाः शूद्रब्राह्मणव्यतिरिक्ताः पशवो भवन्ति । तेऽष्टावपि प्राजापत्याः प्रजापतिदेवताः 'अष्टावुत्तमानालभत' इत्युपक्रम्य 'ते वै प्राजापत्या भवन्ति' ( १३ । ६ । २ । ७—८ ) इति श्रुतेः । अत्र जातिनियमात्पूर्वेषु जातेरनियमः । वीणावादादयश्चतुर्दश अतिदीर्घादयोऽष्टौ एवं द्वाविंशतिः शेषाः । तथा मागधः पुंश्चली कितवः क्लीबः एते चत्वारोऽपि शूद्रब्राह्मणव्यतिरिक्ताः प्रजापतिदेवताः पूर्वैः सहैते षड्विंशतिः ते सर्वे द्वितीययूपे नियोज्याः । सर्वेषां नियोगानन्तरं तान्नियुक्तान् पुरुषान् 'सहस्रशीर्षा पुरुषः' ( ३१ । १–१६ )इति षोडशर्चेनानुवाकेन दक्षिणत उपविष्टो होतृवदभिष्टौति । होतृवदिति प्रथमोत्तमयोस्त्रिर्वचनम् ऋगन्तानां प्रणवेन संधानं च । यथा सहस्रशीर्षा पुरुषः—०ङ्गुलो३म् पुरुष एवेदᳪ—०रोहतो३म् । एवमभिष्टौति । तत आलम्भनक्रमेण यथादेवतं प्रोक्षणादि । ब्राह्मणादीनां पर्यग्निकरणानन्तरमिदं ब्रह्मणे इदं क्षत्रायेत्येवं सर्वेषां यथास्वस्वदेवतोद्देशेन त्यागः । ततः सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्योत्सृजति । तत एकादशिनैः पशुभिः संज्ञपनादिप्रधानयागान्तं वनस्पतियागं कृत्वा प्राक् स्विष्टकृतः अध्वर्युराज्यं संस्कृत्य सकृद्गृहीतमाज्यं गृहीत्वा ओम् पुरुषदेवताभ्यो ब्रह्मादिभ्यः आहवनीये जुहोति ओम् ब्रह्मणे स्वाहा १ क्षत्राय स्वाहा २ मरुद्भ्यः ३ तपसे ४ तमसे ५ इत्याद्यध्यायान्तं सर्वदेवताभ्यः चतुरशीत्युत्तरशतसंख्याकाभ्यः तावतीर्घृताहुतीर्हुत्वा स्विष्टकृदादि उदवसानीयान्तं कर्म कृत्वान्ते यजमानः 'अयं ते योनिः' इति मन्त्रेणात्मन्यग्नीन् समारोप्य 'अद्भ्यः संभृत' ( ३१ । १७ ) इति षड्चेनानुवाकेन सूर्यमुपस्थाय पश्चादनवलोकयन्नरण्यं गत्वा संन्यसेत् । 'गार्हपत्येऽधरारणिमनुप्रहृत्याहवनीय उत्तरारणिमात्मन्यग्नी समारोप्यारण्यं व्रजेत्' इति शाङ्खायनोक्तेः । यदि पुरुषमेधानन्तरं ग्रामवासेच्छा तर्ह्युदवसानीयान्ते सायमाहुती हुत्वारण्योरग्नी समारोप्योत्तरनारायणेनार्कमुपस्थाय देवजयनमादीप्य गृहं व्रजेत् । गृहे आगत्य निर्मथ्याग्निं स्थापयेत् यथेच्छं यज्ञानपि कुर्यात् । अयमपि पक्षोऽस्ति । तत् पुरुषमेधानन्तरं संन्यास एव ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
त्रिंशेऽध्याये प्रकथिताः पशवो नरमेधिके ॥ ३० ॥

# एकत्रिंशोऽध्यायः ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिᳪ सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

[ सहस्रशीर्षेतिसहस्र शीर्षा । पुरुषः । सहस्राक्षऽइतिसहस्र अक्षः । सहस्रपादितिसहस्र पात् ॥ सः । भूमिम् । सर्वतः । स्पृत्वा । अति । अतिष्ठत् । दशाङ्गुलमितिदश अङ्गुलम् ॥१॥ ]

परमात्मा सहस्रों शिर, आँख और पैरों वाला है। वह सब ओर भूमि ( =जगत्प्रपंच ) को स्पर्श करके ( =व्याप्त कर ) भी जगत्-विकारों से दश अंगुल ( =बहुत ) दूर ही स्थित रहता है ॥ १ ॥

**उ०** परमात्मविज्ञानानन्दादिगुणाध्यात्मनि प्रभूतः पुरुषमेधो यज्ञः प्रजापतिः लोककालाद्यादिवपुः पुरुषोत्पत्तिस्थितिसंहृतीनां हेतुः स्वर्गापवर्गैश्वर्यमोक्षदो ज्ञानकर्मसमुच्चयकारणं शरीरं 'यज्ञो वा अस्यात्मा भवती'ति श्रुतिः । सहस्रशीर्षा पुरुष इत्यनुवाकेन षोडशर्चेनानुष्टुभेन त्रिष्टुबन्तेन ब्रह्मणे ब्राह्मणमित्याद्यवयवभूतपुरुषद्वारेणावयवी स्तूयते । इदानीं स्तुत्यर्थं निर्वचनद्वारेण द्रढयितुमाह । 'अथ यस्मात्पुरुषमेधो नानेमे वै लोकाः पूरयमेव पुरुषो योयं पवते

# सभाष्यशुक्लयजुर्वेदपरिशिष्टानि

## अथाष्टविकृतिप्रारंभः ।

॥ अथाष्टौ विकृतीनां स्वरूपकथनम् ॥ कात्ताः ॥ जटा-मालादण्डरेखारथध्वजशिखाघनाः ॥ क्रममाश्रित्य निर्वृत्ता विकारा अष्टविश्रुताः ॥ १ ॥ विश्रुताः ॥ जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ॥ अष्टौ विकृतयः प्रोक्ताः क्रम-पूर्वा महर्षिभिः ॥ २ ॥ द्विपदादिक्रमाः पञ्च प्रक्रमाद्युत्क्रमा त्ततः ॥ पुन्नः क्रमादुद्धदिता जटात्वं प्रापिता बुधैः ॥ ३ ॥ वैदिकैः पठ्यमानत्वात्प्रत्यक्षस्मृतिमिलतः ॥ जटाद्यध्ययनं कार्यं पङ्क्तिपावनकारणात् ॥ ४ ॥ जटादिविकृतीनां ये पारायणपरा नराः ॥ महात्मानो द्विजाः श्रेष्ठाः ते ज्ञेयाः पङ्क्तिपावनाः ॥ ५ ॥ इति वाराहपुराणे ॥ मार्कण्डेये च ॥ क्रमाध्ययनसम्पन्नो मन्त्रब्राह्मणपारगः ॥ जटापारायणपरो विष्णुलोके महीयते ॥ ६ ॥ जटापाठपरं विप्रं यो गर्हयति मूढधीः ॥ पुनरावृत्तिसहितं तमः प्राप्नोति नान्यथा ॥ ७ ॥ वृद्धमनुः ॥ वेदवेदार्थतत्त्वज्ञा जटाक्रमविशारदाः ॥ श्रोत्रिया ब्राह्मणाः श्राद्धे ये नराः पङ्क्तिपावनाः ॥ ८ ॥ पराशरः ॥ संहितावित्स्वर्गगामी पदवेदी महर्गतिः ॥ क्रमी जनतपः सत्तगामी वैकुण्ठभोग्जटी ॥ ९ ॥ यथा ॥ अथ जटा ॥ त्र्यम्बकँ॒य्यजामहेयजामहे॒त्र्यम्बकं॒त्र्यम्बकँ॒य्यजामहे । त्र्य म्बकमिति त्रिऽअम्बकम् । यजामहे॒सुगन्धिᳬसुगन्धिँय्यजा महेयजामहेसुगन्धिम् । सुगन्धिम्पुष्टिवर्द्धनम्पुष्टिवर्द्धनᳬसुग न्धिᳬसुगन्धिम्पुष्टिवर्द्धनम् । सुगन्धिमिति सुऽगन्धिम् । पुष्टि वर्द्धनमिति पुष्टिऽवर्द्धनम् ॥ उर्वारुकमिवबन्धनाद्बन्धना दुर्वारुकमिवोर्वारुकमिवबन्धनात् । उर्वारुकमिवेत्युर्वारुकम् ऽइव । बन्धनान्मृत्योर्मृत्योर्बन्धनाद्बन्धनान्मृत्योः । मृत्योर्मुक्षीयमुक्षीयमृत्योर्मृत्योर्मुक्षीय । मुक्षीयमा मामामुक्षीयमुक्षीयमा । मामृतादमृतान्मामामृतात् । अमृतादित्यमृतात् ॥ पतिवेदनमितऽइतःपतिवेदनम्पतिवे दनमितः । पतिवेदनमितिपतिऽवेदनम् । इतोमुक्षीयमु क्षीयेतऽइतोमुक्षीय । मुक्षीयमामामुक्षीयमुक्षीयमा । मामुतामुतोमामामुतः । अमुतऽइत्यमुतः ॥१॥ (जटा॥) स्वादित्याऽ पुनस्त्वात्वापुनः पुनस्त्वा । पुनरितिपुनः । आदित्याऽ आदित्यास्त्वात्वादित्याः । आदित्यारुद्राऽरुद्राऽआदि त्याऽआदित्यारुद्राः ॥ रुद्राव्वसवोव्वसवोरुद्रारुद्राव्वसवः । व्वसवःसᳬसंव्वसवोव्वसवःसम् । समिन्धतामिन्धताᳬसᳬ समिन्धताम् । इन्धतांपुनःपुनरिन्धतामिन्धताम्पुनः ।

पुनर्ब्रह्माणोब्रह्माणःपुनःपुनर्ब्रह्माणः । ब्रह्माणोव्वसुनीथव्व सुनीथब्रह्माणोब्रह्माणोव्वसुनीथ । व्वसुनीथयज्ञैर्य्यज्ञैर्व्वसुनी थव्वसुनीथयज्ञैः । व्वसुनीथेतिव्वसुऽनीथ । यज्ञैरितियज्ञैः ॥ घृतेनत्त्वंत्वङ्घृतेनघृतेनत्त्वम् । त्वन्तन्वन्तन्वन्त्वन्त्वन्तन्वम् । तन्वंव्वर्द्धयस्वव्वर्द्धयस्वतन्वन्तन्वंव्वर्द्धयस्व । व्वर्द्धयस्वसत्त्याः सत्त्याव्वर्द्धयस्वव्वर्द्धयस्वसत्त्याः । सत्त्याःसन्तुसन्तुसत्त्याः सत्त्याःसन्तु । सन्तुयजमानस्ययजमानस्यसन्तुसन्तुयजमा नस्य । यजमानस्यकामाःकामायजमानस्ययजमानस्यका माः । कामाऽइतिकामाः ॥ २ ॥ सनोनःससनः । नःपि तेवपितेवनोनःपितेव । पितेवसूनवेसूनवेपितेवपितेवसूनवे । पितेवेतिपिताऽइव । सूनवेग्नेग्नेसूनवेसूनवेग्ने । अग्नेसूपायनः सूपायनोग्नेग्नेसूपायनः । सूपायनोभवभवसूपायनःसूपाय नोभव । सूपायनऽइतिसुऽउपायनः । भवेतिभव ॥ सचस्वा नोनःसचस्वसचस्वानः । नःस्वस्तयेस्वस्तयेनोनःस्वस्तये । स्वस्तयऽइतिस्वस्तये ॥ ३ ॥ अथ क्रममाला निरूप्यन्ते ॥ ब्रूयात्क्रमविपर्यासानर्धर्चस्यादितोऽन्ततः । अन्तश्चादि नये-देवं क्रममालेति गीयते ॥ १ ॥ क्रमविपर्यासान् ॥ क्रमक्रम-व्युत्क्रमाभ्यामर्धर्चस्यादितः अन्ततो व्युत्क्रमोपक्रममिति विशेषः ॥ ब्रूयात् ॥ एवं क्रमविपर्यासाभ्यां क्रमं ब्रुवन् पुमान् आदित आदित आरभ्य क्रमं समानं समाप्तिं नयेत् ॥ अन्तमन्तत आरब्धं क्रमं आदितः समाप्तिं नयेत् ॥ प्रापये-दित्यर्थः ॥ यथा ॥ ॐ ॥ यज्ञेनयज्ञम् । आसन्नित्यां सन् । यज्ञमयजन्त । आसन्प्रथमानि । अयजन्तदेवाः । प्रथमानिधर्म्माणि । देवास्तानि । धर्म्माणितानि । तानि धर्म्माणि । तानिदेवाः । धर्म्माणिप्रथमानि । देवाऽअय जन्त । प्रथमान्यासन् । अयजन्तयज्ञम् । आसन्नित्यासन् । यज्ञँयज्ञेन ॥ तेह । देवाऽइतिदेवाः । हनाकम् । देवाः सन्ति । नाकम्महिमानः । सन्तिसाद्ध्याः । महिमानः सचन्त । साद्ध्याःपूर्वे । सचन्तयत्र । पूर्वेयत्र । यत्रपूर्वे । यत्रसचन्त । पूर्वेसाद्ध्याः । सचन्तमहिमानः । साद्ध्याः सन्ति । महिमानोनाकम् । सन्तिदेवाः । नाकᳬह । देवाऽ इतिदेवाः । हते ॥ १ ॥ मालामालेवपुष्पाणां पदानां ग्रथिनी हि सा ॥ आवर्त्तते त्रयस्तस्यां क्रमव्युत्क्रमसंक्रमाः ॥ १ ॥ यथा ॥ अथपुष्पमालाविकृतिः ॥ परीत्त्यभूतानि । भूतानि परीत्त्य । परीत्त्यभूतानि । परीत्त्येतिपरीऽइत्त्य । भूतानि

परीत्त्यं । परीत्त्यंभूतानि । भूतानिंपरीत्त्यं । परीत्त्यंल्लोकान् । ल्लोकान्त्परीत्त्यं । परीत्त्यंल्लोकान् । परीत्त्येतिपरीऽइत्त्यं । ल्लोकान्त्परीत्त्यं । परीत्त्यंल्लोकान् । ल्लोकान्त्परीत्त्यं । परीत्त्य मर्व्वाः । मर्व्वाःपरीत्त्यं । परीत्त्यसर्व्वाः । परीत्त्येतिपरीऽ इत्त्यं । मर्व्वाःप्प्रदिशः । प्रदिशःसर्व्वाः । सर्व्वाःप्प्रदिशः । प्रदिशोदिशः । दिशःप्प्रदिशः । प्रदिशोदिशः । प्रदि शऽइतिंप्प्रदिशः । दिशश्च । चदिशःदिशश्च । चेतिंच ॥ उपस्त्थायंप्प्रथमजाम् । प्रथमजामुपस्त्थायं । उपस्त्थायं प्प्रथमजाम् । उपस्त्थायेत्त्युंपऽस्थायं । प्रथमजामृतस्यं । ऋतस्यंप्प्रथमजाम् । प्रथमजामृतस्यं । प्रथमजामितिंप्प्रथमऽ जाम् । ऋतस्यात्क्मनां । आत्क्मनंऽऋतस्यं । ऋतस्या त्क्मनां । आत्क्मनात्क्मानंम् । आत्क्मानंमात्क्मनां । आत्क्मनात्क्मानंम् । आत्क्मानंमभि । अब्भ्यात्क्मानंम् । आत्क्मानंमभि । अभिसम् । समभि । अभिसम् । संविं वेश । विवेशसम् । संविंवेश । विवेशेतिंविवेश ॥ १ ॥ परिद्यावांपृथिवी । द्यावांपृथिवीपरिं । परिद्यावांपृथिवी । द्यावांपृथिवीसद्यः । सद्योद्यावांपृथिवी । द्यावांपृथिवीसद्यः । द्यावांपृथिवीऽइतिद्यावांपृथिवी । सद्यऽइत्त्वा । इत्त्वासद्यः । सद्यऽइत्त्वा । इत्त्वापरिं । परीत्त्वा । इत्त्वापरिं । परिंल्लो कान् । ल्लोकान्त्परिं । परिंल्लोकान् । ल्लोकान्त्परिं । परिंल्लो कान् । ल्लोकान्त्परिं । परिदिशः । दिशःपरिं । परिदिशः । दिशःपरिं । परिदिशः । दिशःपरिं । परिस्वः । स्वःपरिं । परिस्वः । स्वरितिस्वः ॥ ऋतस्यतन्तुंम् । तन्तुंमृतस्यं । ऋतस्यतन्तुंम् । तन्तुंवितंतम् । वितंतन्तन्तुंम् । तन्तुंवितंतम् । वितंतंविचृत्त्यं । विचृत्त्यवितंतम् । वितंतंविचृत्त्यं । वितंत मितिविऽतंतम् । विचृत्त्यतत् । तद्विचृत्त्यं । विचृत्त्यतत् । विचृत्त्यंतिंविऽचृत्त्यं । तदंपश्श्यत् । अपश्श्यत्तत् । तदंप श्श्यत् । अपश्श्यत्तत् । तदंपश्श्यत् । अपश्श्यत्तत् । तदं भवत् । अभवत्तत् । तदंभवत् । अभवत्तत् । तदंभवत् । अभवत्तत् । तदांसीत् । आसीत्तत् । तदांसीत् । आसीदि त्यांसीत् ॥ २ ॥ इति पुष्पमालाविकृतिः ॥

॥ अथ पञ्चसंधीविकृतिमन्त्रः ॥

ॐ वण्महान् । महान्महान् । महान्वट् । वट्वट् । वण्महान् । महाँ२ऽअंसि । अस्यसि । असिमहान् । महान्महान् । महाँ२ ऽअंसि । असिसूर्य्य । सूर्य्यसूर्य्य । सूर्य्यासि । अस्यसि । असि सूर्य्य । सूर्य्यवट् । वट्वट् । वट्सूर्य्य । सूर्य्यसूर्य्य । सूर्य्यवट् । वडांदित्त्य । आदित्त्यादित्त्य । आदित्त्यवट् । वट्वट् । वडां दित्त्य । आदित्त्यमहान् । महान्महान् । महानांदित्त्य । आदित्त्यादित्त्य । आदित्त्यमहान् । महाँ२ऽअंसि । अस्यसि । असिमहान् । महान्महान् । महाँ२ऽअंसि । असीत्त्यंसि ॥ महस्त्तें । तेते । तेमहः । महोमहः । महस्त्तें । तेसतः । सतस्सतः । सतस्त्तें । तेते । तेसतः । सतोमंहिमा । महिमा मंहिमा । महिमासतः । सतस्सतः । सतोमंहिमा । महि मार्पनस्यते । पनस्यतेपनस्यते । पनस्यतेमहिमा । महिमा मंहिमा । महिमार्पनस्यते । पनस्यतेद्धा । अद्धाद्धा । अद्धा पंनस्यते । पनस्यतेपनस्यते । पनस्यतेद्धा । अद्धादेंव । देव देव । देवाद्धा । अद्धाद्धा । अद्धादेंव । देवमहान् । महान्म हान् । महान्देंव । देवदेव । देवमहान् । महाँ२ऽअंसि । अस्यसि । असिमहान् । महान्महान् । महाँ२ऽअंसि । असीत्त्यंसि ॥ १ ॥ वट्सूर्य्य । सूर्य्यसूर्य्य । सूर्य्यवट् । वट्वट् । वट्सूर्य्य । सूर्य्यश्श्रवंसा । श्रवंसाश्श्रवंसा । श्रवंसा सूर्य्य । सूर्य्यसूर्य्य । सूर्य्यश्श्रवंसा । श्रवंसामहान् । महान्म हान् । महाञ्छ्रवंसा । श्रवंसाश्श्रवंसा । श्रवंसामहान् । महाँ २ऽअंसि । अस्यसि । असिमहान् । महान्महान् । महाँ२ऽ अंसि । असिसत्रा । सत्रासत्रा । सत्रासिं । अस्यसि । असि सत्रा । सत्रादेंव । देवदेव । देवसत्रा । सत्रासत्रा । सत्रादेंव । देवमहान् । महान्महान् । महान्देंव । देवदेव । देवमहान् । महाँ२ऽअंसि । अस्यसि । असिमहान् । महान्महान् । महाँ २ऽअंसि । असीत्त्यंसि ॥ मह्नादेवानांन् । देवानान्देवाना म् । देवानान्मह्ना । मह्नामह्ना । मह्नादेवानांम् । देवानां मसुर्य्यः । असुर्य्योसुर्य्यः । असुर्य्योदेवानांम् । देवानान्दे वानांम् । देवानांमसुर्य्यः । असुर्य्यःपुरोहिंतः । पुरोहिंतः पुरोहिंतः । पुरोहिंतोसुर्य्यः । असुर्य्योसुर्य्यः । असुर्य्यः पुरोहिंतः । पुरोहिंतोविभु । विभुविभु । विभुपुरोहिंतः । पुरोहिंतःपुरोहिंतः । पुरोहिंतोविभु । पुरोहिंतऽइतिपुरः हिंतः । विभुज्ज्योतिः । ज्योतिर्ज्योतिः । ज्योतिर्व्विभु । विभुविभु । विभुज्ज्योतिः । विभ्वितिंविभू । ज्योतिरदा ब्भ्यम् । अदाब्भ्यमदाब्भ्यम् । अदाब्भ्यज्ज्योतिः । ज्योति र्ज्योतिः । ज्योतिरदाब्भ्यम् । अदाब्भ्यमित्त्यदाब्भ्यम् ॥ २ ॥

अथ शिखा ॥ पदोत्तरं शिखामेव जटायामः प्रचक्षते आर्याः पदोत्तरसंक्रमा जटां शिखां प्रवदन्ति ॥ यथा ॥

श्रीश्चचश्रीःश्रीश्चते । चतेतेचचतेलक्ष्मीः । तेलक्ष्मीर्ल्लक्ष्मींस्त्ते तेलक्ष्मीश्च । लक्ष्मीश्चचलक्ष्मीर्ल्लक्ष्मीश्चपत्क्यौ । चपत्क्यौप त्क्यौंचचपत्क्न्यांवहोरात्रे । पत्क्यांवहोरात्रेऽअंहोरात्रेपत्क्यौं पत्क्यांवहोरात्रेपार्श्वे । अहोरात्रेपार्श्वेपार्श्वेऽअंहोरात्रेऽपार्श्वेन क्षंत्राणि । अहोरात्रेऽइत्त्यंहोरात्रे । पार्श्वेनक्षंत्राणिनक्षं त्राणिपार्श्वेपार्श्वेनक्षंत्राणिरूपम् । पार्श्वेऽइतिपार्श्वे । नक्षं त्राणिरूपꣳरूपन्नक्षंत्राणिनक्षंत्राणिरूपमश्विनौं । रूपम श्विनांवश्विनौंरूपꣳरूपमश्विनौंव्यात्तंम् । अश्विनौव्यात्तं व्यात्तंमश्विनांवश्विनौव्यात्तंम् । व्यात्तमितिंविऽआत्तंम् ॥ इष्णन्निषाणेषाणेष्णन्निष्णन्निषाणामुम् । इषाणामुमम मिषाणेषाणामुम्मं । अमुम्मैमेमममुम्मंऽइषाण । मऽइषाणे षाणमेमऽइषाणसर्व्वंल्लोकम् । इषाणसर्व्वंल्लोकꣳसंर्व्वंल्लोकमि षाणेषाणसर्व्वंल्लोकम्मे । सर्व्वंल्लोकम्ममेसर्व्वंल्लोकꣳसंर्व्वंल्लोकम्मं

ऽइपाण । सर्वंलोकमितिसर्वंऽलोकम् । मइपाणेपाणमेमऽइ पाण । इपाणेतीपाण ॥ १ ॥ धातारातीरातिर्धाताधातारातिश्शंसविता । रातिश्शंसवितासवितारातीरातिश्शंसवितेदम् । सवितेदंमिदंसवितासवितेदञ्जुपन्ताम् । इदञ्जुपन्ताञ्जुपन्तामिदमिदञ्जुपन्ताम्प्रजापतिः । जुषन्ताम्प्रजापतिस्प्रजापतिञ्जुपन्ताञ्जुपन्ताम्प्रजापतिर्निधिपाः । प्रजापतिर्निधिपानिधिपाः प्रजापतिस्प्रजापतिर्निधिपादेवः । प्रजापतिरितिप्रजाऽपतिः । निधिपादेवोदेवोनिधिपादेवोऽअग्निः । निधिपाऽइतिनिधिऽपाः । देवोऽअग्निरग्निर्हेवोदेवोऽअग्निः । अग्निरित्यग्निः ॥ त्वष्टाविष्णुर्विष्णुस्त्वष्टात्वष्टाविष्णुःप्रजया । विष्णुःप्रजयाप्रजयाविष्णुर्विष्णुःप्रजयासꣳरराणाः । प्रजयासꣳरराणाःसꣳरराणाःप्रजयाप्रजयासꣳरराणायजमानाय । प्रजयेतिप्रऽजया । सꣳरराणायजमानायजमानायसꣳरराणाःसꣳरराणायजमानायद्रविणम् । सꣳरराणाऽइतिसम्ऽरराणाः । यजमानायद्रविणन्द्रविणंयजमानायजमानायद्रविणन्दधात । द्रविणन्दधातदधातद्रविणन्द्रविणन्दधातस्वाहा । दधातुस्वाहास्वाहादधातदधातुस्वाहा । स्वाहेतिस्वाहा ॥ २ ॥ अथ रेखा ॥ क्रमाद्वित्रिचतुःपञ्चपदक्रममुदाहरेत् । पृथक् पृथक् विपर्यस्य रेखामाहुः पुनः क्रमात् ॥ १ ॥ क्रमात् ॥ अनुःक्रमात ॥ द्वित्रीचतुःपञ्चपदः क्रमम् प्रत्येकं प्रत्येकं विपर्यस्य क्रमादुदाहरेत् ॥ एवमुक्त्वा विकृतिनाम रेखां प्रचक्षते ॥ महान्त आहुरित्यर्थः ॥ यथा ॥ ॐ बृहस्पतेपरि । परिबृहस्पते । बृहस्पतेपरि । परिदीया रथेन । रथेनदीयपरि । परिदीय । दीयारथेन । रथेनरक्षोहा मित्राँ२ऽअपबाधमानः । अपबाधमानोमित्रान्रक्षोहारथेन । रथेनरक्षोहा । रक्षोहामित्रान् । रक्षोहेतिरक्षःऽहा । अमित्राँ२ऽअपबाधमानः । अपबाधमानऽइत्यपऽबाधमानः ॥ प्रभञ्जन्त्सेनाःप्रमृणोयुधाजयन् । जयन्युधाप्रमृणः सेनाःप्रभञ्जन् । प्रभञ्जन्नितिप्रऽभञ्जन् । सेनाःप्रमृणः । प्रमृणोयुधा । प्रमृणऽइतिप्रऽमृणः । युधाजयन् । जयन्नस्माकमेदुध्यविताथानाम् । रथानामवितैदुध्युस्माकञ्जयन् । जयन्नस्माकम् । अस्माकमेधि । एदुध्यविता । अविता रथानाम् । रथानामितिरथानाम् ॥ १ ॥ इति रेखाविकृतिः ॥ अथ ध्वजः ॥ भूयादादेः क्रमं सम्यग्गन्तादुच्चारयेदिति । वर्गे वा ऋचि वा यत्र पठनं स ध्वजः स्मृतः ॥ वर्गे वा ऋचि वास्यादिः ॥ आदित आरभ्य सम्यक् क्रमं ब्रूयात् ॥ अन्तादयं क्रममारभ्य सम्यगुत्तारयेत् ॥ एकमेकं पूर्वं पूर्वं पदं अन्तोपान्त्यादिक्रमपूर्वं अनुक्रमेणावार्पयदित्यर्थः ॥ इति ये सादितं स्यात् ॥ स ध्वज इत्यर्थः ॥ यथा ॥ ॐ बृहस्पतेपरि । रथानामितिरथानाम् । परिदीय । अवितारथानाम् । दीयपरि । एदुध्यविता । रथेनरक्षोहा । अस्माकमेधि । रक्षोहामित्रान् । जयन्नस्माकम् । रक्षोहेतिरक्षःऽहा । युधाजयन् । अमित्राँ२ऽअपबाधमानः । प्रमृणोयुधा । प्रभञ्जन्त्सेनाः । सेनाःप्रमृणः । प्रभञ्जन्नितिप्रऽभञ्जन् । सेनाःप्रमृणः । प्रभञ्जन्त्सेनाःप्रमृणोयुधा । अपबाधमानऽइत्यपऽबाधमानः । प्रमृणऽइतिप्रऽमृणः । अमित्राँ२ऽ अपबाधमानः । युधाजयन् । रक्षोहेतिरक्षःऽहा । जयन्नस्माकम् । रक्षोहामित्रान् । अस्माकमेधि । रथेनरक्षोहा । एदुध्यविता । दीयारथेन । अवितारथानाम् । परिदीय । रथानामितिरथानाम् । बृहस्पते परि ॥ १ ॥ इति ध्वजाविकृतिः ॥ अथ दण्डः ॥ क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम् ॥ अर्धर्चादेवमुक्त्वोक्तः क्रमदण्डोऽभिधीयते ॥ १ ॥ पुनश्च पुनरपि आदित आरभ्य क्रममुच्चरेत् ॥ एवं पूर्वार्धर्चक्रमसम्बन्धत्वेनोत्तरार्द्धर्चं क्रममुक्त्वा ॥ पूर्वार्धं चादिपदपर्यन्तं विपर्यासेन संहितामुक्त्वा ॥ पुनस्ततऽआरभ्योत्तरार्धर्चस्थपर्यन्तं किंकसोवाश्च एवेत्यन्तो नेत्याह ॥ अर्धर्चादिति अर्धर्चपरिसमाप्तिपर्यन्तं एवायं नियमः ॥ तस्योक्ता उच्चारेण दण्डो नाम विकृतिविशेषोऽभिधीयते ॥ यथा ॥ ॐताऽउभौ । उभौतौ । ताऽउभौ । उभौचतुरः । चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्गे । स्वर्गेसम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्गे । सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्गे लोके । लोकेस्वर्गेसम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्गे । सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्गेलोके । स्वर्गेऽइतिस्वःऽगे । लोकेप्र । प्रलोकेस्वर्गेसम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्गे । सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्गेलोके । स्वर्गऽइतिस्वःऽगे । लोकेप्र । प्रोर्णुवाथाम् । ऊर्णुवाथाम्प्रलोकेस्वर्गेसम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्गे । सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्गेलोके । स्वर्गऽइतिस्वःऽगे । लोकेप्र । प्रोर्णुवाथाम् । ऊर्णुवाथांवृषा । वृषोर्णुवाथाम्प्रलोकेस्वर्गेसम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्गे । सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्गेलोके । स्वर्गऽइतिस्वःऽगे । लोकेप्र । प्रोर्णुवाथाम् । ऊर्णुवाथांवृषा । वृषावाजी । वाजीवृषोर्णुवाथाम्प्रलोकेस्वर्गेसम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः । चतुरःपदः ।

पुदश्सम्प्रसारयाव। सुम्प्रसारयावस्वर्ग। सुम्प्रसारयावेतिसुम्ऽप्रसारयाव। स्वर्गेलोके। स्वर्गऽइतिस्वःऽगे। लोकेप्र। प्रोर्णुवाथाम्। ऊर्णुवाथांवृपा। वृपांवाजी। वाजीरैतोधाः। रेतोधावाजीवृपोर्णुवाथाम्प्रलोकेस्वर्गेसुम्प्रसारयावपुदश्चतुरंऽउभौतौ। ताऽउभौ। उभौचतुरं॑। चतुरं॑पदः। पुदश्सम्प्रसारयाव। सुम्प्रसारयावस्वर्गे। सुम्प्रसारयावेतिसुम्ऽप्रसारयाव। स्वर्गेलोके। स्वर्गऽइतिस्वःऽगे। लोकेप्र। प्रोर्णुवाथाम्। ऊर्णुवाथांवृपा। वृपांवाजी। वाजीरैतोधाः। रेतोधारेतः। रेतोरेतोधावाजीवृपोर्णुवाथाम्प्रलोकेस्वर्गेसम्प्रसारयावपुदश्चतुरंऽउभौतौ। ताऽउभौ। उभौचतुरं॑। चतुरं॑पदः। पुदश्सम्प्रसारयाव। सम्प्रसारयावस्वर्गे। सुम्प्रसारयावेतिसुम्ऽप्रसारयाव। स्वर्गेलोके। स्वर्गऽइतिस्वःऽगे। लोकेप्र। प्रोर्णुवाथाम्। ऊर्णुवाथांवृपा। वृपावाजी। वाजीरैतोधाः। रेतोधारेतः। रेतोधाऽइतिरेतःऽधाः। रेतोदधातु। दुधातुरेतोरेतोधावाजीवृपोर्णुवाथाम्प्रलोकेस्वर्गेसम्प्रसारयावपुदश्चतुरंऽउभौतौ। ताऽउभौ। उभौ चतुरः। चतुरं॑पदः। पुदश्सम्प्रसारयाव। सम्प्रसारयाव स्वर्गे। सुम्प्रसारयावेतिसुम्ऽप्रसारयाव। स्वर्गेलोके। स्वर्गऽइतिस्वःऽगे। लोकेप्र। प्रोर्णुवाथाम्। ऊर्णुवाथांवृपा। वृपावाजी। वाजीरैतोधाः। रेतोधारेतः। रेतोधाऽइतिरेतःऽधाः। रेतोदधातु। दुधात्वितिदधातु॥१॥ इति दण्डक्रमः।

अथ क्रमरथः॥ पादशोर्धर्चशो वापि सहोक्त्वा दण्डवद्रथः॥ ऋचोर्धर्चयोः पदयोर्दण्डवत्संहितापदक्रमैः॥ १॥ सहोक्त्वा रथो विहितो भवतीत्यर्थः॥ सहोक्तिरेव रथ इति यावत्॥ यथा॥ चतुष्पाद्रथः॥ ॐ स्वस्तिनः। स्वस्ति नः। स्वस्तिनः। स्वस्तिनः। नुःस्वस्ति। नःस्वस्ति। नुःस्वस्ति। नःस्वस्ति। स्वस्तिनः। स्वस्तिनः। स्वस्तिनः। स्वस्तिनः। नुऽइन्द्रः। नुःपूषा। नुस्ताक्ष्यः। नोवृहुस्पतिः। इन्द्रोनःस्वस्ति। पूषानः स्वस्ति। ताक्ष्योनःस्वस्ति। वृहुस्पतिर्नःस्वस्ति। स्वस्ति नः। स्वस्तिनः। स्वस्तिनः। स्वस्तिनः। नुऽइन्द्रः। नुःपूषा। नुस्ताक्ष्यः। नोवृहुस्पतिः। इन्द्रोवृद्धश्रवाः। पूषाविश्ववेदाः। ताक्ष्योऽअरिष्टनेमिः। वृहस्पतिर्दधातु। वृद्धश्रवाऽइन्द्रोनःस्वस्ति। विश्ववेदाःपूषा नःस्वस्ति। अरिष्टनेमिस्ताक्ष्योनःस्वस्ति। दुधातुवृहस्पतिर्नःस्वस्ति। स्वस्तिनः। स्वस्तिनः। स्वस्तिनः। स्वस्तिनः। नुऽइन्द्रः। नुःपूषा। नुस्ताक्ष्यः। नोवृहस्पतिः। इन्द्रोवृद्धश्रवाः। पूषाविश्ववेदाः। ताक्ष्योऽअरिष्टनेमिः। वृहस्पतिर्दधातु। वृद्धश्रवाऽइतिवृद्धऽश्रवाः। विश्ववेदाऽइतिविश्वऽवेदाः। अरिष्टनेमिरित्यरिष्टऽनेमिः। दुधात्वितिदधातु॥ १॥ इति चतुष्पाद्रथः॥

॥ अथ द्विपाद्रथः॥

ॐ अनिशितोसि। अनिशितासि। असुस्यनिशितः। असुस्यनिशिता। अनिशितोसि। अनिशितासि। अनिशितऽइत्त्यनिऽशितः। अनिशितेत्त्यनिऽशिता। असिसपत्नक्षित्। असिसपत्नक्षित्। सपत्नक्षिदुस्यनिशितः। सपत्नक्षिदुस्यनिशिता। अनिशितोसि। अनिशितासि। अनिशितइत्त्यनिऽशितः। अनिशितेत्त्यनिऽशिता। असिसपत्नक्षित्। असिसपत्नक्षित्। सपत्नक्षिद्वाजिनम्। सपत्नक्षिद्वाजिनीम्। वाजिनं सपत्नक्षिदुस्यनिशितः। वाजिनीं सपत्नक्षिदुस्यनिशिता। अनिशितोसि। अनिशितासि। अनिशितऽइत्त्यनिऽशितः। अनिशितेत्त्यनिऽशिता। असिसपत्नक्षित्। असिसपत्नक्षित्। सपत्नक्षिद्वाजिनम्। सपत्नक्षिद्वाजिनीम्। सपत्नक्षिदितिसपत्नऽक्षित्। सपत्नक्षिदितिसपत्नऽक्षित्। वाजिनन्त्वा। वाजिनीन्त्वा। त्वावाजिनं सपत्नक्षिदुस्यनिशितः। त्वावाजिनीं सपत्नक्षिदुस्यनिशिता। अनिशितोसि। अनिशितासि। अनिशितऽइत्त्यनिऽशितः। अनिशितेत्त्यनिऽशिता। असिसपत्नक्षित्। असिसपत्नक्षित्। सपत्नक्षिद्वाजिनम्। सपत्नक्षिद्वाजिनीम्। सपत्नक्षिदितिसपत्नऽक्षित्। सपत्नक्षिदितिसपत्नऽक्षित्। वाजिनन्त्वा। वाजिनीन्त्वा। त्वावाजेद्ध्यायै। त्वावाजेद्ध्यायै। वाजेद्ध्यायैत्त्वावाजिनं सपत्नक्षिदुस्यनिशितः। वाजेद्ध्यायैत्त्वावाजिनीं सपत्नक्षिदुस्यनिशिता। अनिशितोसि। अनिशितासि। अनिशितऽइत्त्यनिऽशितः। अनिशितेत्त्यनीऽशिता। असिसपत्नक्षित्। असिसपत्नक्षित्। सपत्नक्षिद्वाजिनम्। सपत्नक्षिद्वाजिनीम्। सपत्नक्षिदितिसपत्नऽक्षित्। सपत्नक्षिदितिसपत्नऽक्षित्। वाजिनन्त्वा। वाजिनीन्त्वा। त्वावाजेद्ध्यायै। त्वावाजेद्ध्यायै। वाजेद्ध्यायैसम्। वाजेद्ध्यायैसम्। संवाजेद्ध्यायैत्त्वावाजिनं सपत्नक्षिदुस्यनिशितः। संवाजेद्ध्यायैत्त्वावाजिनीं सपत्नक्षिदुस्यनिशिता। अनिशितोसि। अनिशितासि। अनिशितऽइत्त्यनिऽशितः। अनिशितेत्त्यनीऽशिता। असिसपत्नक्षित्। असिसपत्नक्षित्। सपत्नक्षिद्वाजिनम्। सपत्नक्षिद्वाजिनीम्। सपत्नक्षिदितिसपत्नऽक्षित्। सपत्नक्षिदितिसपत्नऽक्षित्। वाजिनन्त्वा। वाजिनीन्त्वा। त्वावाजेद्ध्यायै। त्वावाजेद्ध्यायै। वाजेद्ध्यायैसम्। वाजेद्ध्यायैसम्। वाजेद्ध्यायाऽइतिवाजऽइद्ध्यायै। वाजेद्ध्यायाऽइतिवाजऽइद्ध्यायैसम्मार्ज्मि। सम्मार्ज्मि। मार्ज्मिसंवाजेद्ध्यायैत्त्वावाजिनं सपत्नक्षिदुस्यनिशितः। मार्ज्मिसंवाजेद्ध्यायैत्त्वावाजिनीं सपत्नक्षिदुस्यनिशिता। अनिशितोसि। अनिशितासि। अनिशितऽ

इत्यनिशितः । अनिशितेत्यनीऽशिता । असिसपत्क्नक्षित । असिमपत्क्नक्षित् । सपत्क्नक्षद्वाजिनम् । सपत्क्नक्षिद्वाजिनीम् । सपत्क्नक्षिदितिसपत्क्नऽक्षित् । मपत्क्नक्षिदितिसपत्क्नऽक्षित् । वाजिनंन्त्वा । वाजिनीन्त्वा । त्वावाजेद्ध्यायै । त्वावाजेद्ध्यायै । वाजेद्ध्यायै मम । वाजेद्ध्यायैसम् । वाजेद्ध्याया इतिवाजऽइद्ध्यायै । वाजेद्ध्याया इतिवाजऽइद्ध्यायै । सम्मार्ज्मि । सम्मार्ज्मि । मार्ज्मीतिमार्ज्मि । मार्ज्मीतिमार्ज्मि ॥ २ ॥ इति द्विपादक्रमरथः ॥ ॥ अथ घनः ॥ शिखा जटा घनः प्रोक्ता इत्यष्टौ विकृतीः पठेत् ॥ अथ द्वितीयः प्रकारो घनः ॥ अन्तक्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् । आदिक्रमं नयेदन्तं घनमाहुर्मनीषिणः ॥ यथा ॥ हरिः ॐ ॥ गुणानान्त्वात्त्वागुणानाङ्गणानान्त्वागुणपतिङ्गणपतिन्त्वागुणानाङ्गणानान्त्वागुणपतिम् ॥ त्वागुणपतिङ्गणपतिन्त्वात्त्वागुणपतिꣳहवामहेहवामहेगुणपतिन्त्वात्त्वागुणपतिꣳहवामहे । गुणपतिꣳहवामहेहवामहेगुणपतिङ्गणपतिꣳहवामहेप्प्रियाणाम्प्रियाणाꣳहवामहेगुणपतिङ्गणपतिꣳहवामहेप्प्रियाणाम् । गुणपतिमितिगुणऽपतिम् । हवामहेप्प्रियाणाम्प्रियाणाꣳहवामहेहवामहेप्प्रियाणाम्प्रियपतिम्प्रियपतिम्प्रियाणाꣳहवामहेहवामहेप्प्रियाणाम्प्रियपतिम् । प्रियाणाम्प्रियपतिम्प्रियपतिम्प्रियाणाम्प्रियाणाम्प्रियपतिन्निधीनान्निधीनाम्प्रियपतिम्प्रियाणाम्प्रियाणाम्प्रियपतिन्निधीनाम् । प्रियपतिन्निधीनान्निधीनाम्प्रियपतिम्प्रियपतिन्निधीनान्निधिपतिन्निधिपतिन्निधीनाम्प्रियपतिम्प्रियपतिन्निधीनान्निधिपतिम् । प्रियपतिमितिप्प्रियऽपतिम् । निधीनान्निधिपतिन्निधिपतिन्निधीनान्निधीनान्निधीपतिंव्वसोव्वसो निधीपतिन्निधीनान्निधीनान्निधिपतिंव्वसो । निधीनामितिनीऽधीनाम् । निधिपतिंव्वसोव्वसोनिधिपतिन्निधिपतिंव्वसोममम मव्वसोनिधिपतिन्निधिपतिंव्वसोमम । निधिपतिमितिनिधीऽपतिम् । व्वसोममममव्वसोव्वसोमम । व्वसोऽइतिव्वसो । ममेतिमम ॥ आहमहमाहमजान्यजान्यहमाहमजानि । अहमजान्यजान्यहमहमजानिगर्ब्भधङ्गर्ब्भधमजान्यहमहमजानिगर्ब्भधम् । अजानिगर्ब्भधङ्गर्ब्भधमजान्यजानिगर्ब्भधमात्त्वन्त्वमागर्ब्भधमजान्यजानिगर्ब्भधमात्त्वम् । गर्ब्भधमात्त्वन्त्वमागर्ब्भधङ्गर्ब्भधमात्त्वमजास्यजासित्त्वमागर्ब्भधङ्गर्ब्भधमात्त्वमजासि । गर्ब्भधमितिगर्ब्भऽधम् । आत्त्वम् । त्वमजास्यजासित्त्वन्त्वमजासिगर्ब्भधङ्गर्ब्भधमजासित्त्वन्त्वमजासिगर्ब्भधम् । अजासिगर्ब्भधङ्गर्ब्भधमजास्यजासि गर्ब्भधम् । गर्ब्भधमितिगर्ब्भऽधम् ॥ १ ॥ अम्बेऽअम्बिकेम्बिकेम्बेम्बेऽअम्बिकेम्बालिकेम्बालिकेम्बिकेम्बेम्बेऽअम्बिकेम्बालिके । अम्बिकेम्बालिकेम्बालिकेम्बिकेम्बिकेम्बालिकेननाम्बालिकेम्बिकेम्बिकेम्बालिकेन । अम्बालिकेननाम्बालिकेम्बालिकेनमामानाम्बालिकेम्बालिकेनमा । नमामाननमानयतिनयतिमाननमानयति । मामयतिनयतिमामानयतिकः कोनयतिमामानयतिकः । नयतिकःकोनयतिनियतिकश्चन चनकोनयतिनयतिकश्चन । कश्चनचनकःकश्चन । चनेतिचन ॥ ससस्त्यश्वकोश्वकःससस्तिससस्त्यश्वकःसुभद्रिकाꣳसुभद्रिकामश्वकःससस्तिससस्त्यश्वकःसुभद्रिकाम् । अश्वकःसुभद्रिकाꣳसुभद्रिकामश्वकोश्वकःसुभद्रिकाङ्काम्पीलवासिनीङ्काम्पीलवासिनीꣳसुभद्रिकामश्वकोश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् । सुभद्रिकाङ्काम्पीलवासिनीङ्काम्पीलवासिनीꣳसुभद्रिकाꣳसुभद्रिकाङ्काम्पीलवासिनीम् । सुभद्रिकामितिसुऽभद्रिकाम् । काम्पीलवासिनीमितिकाम्पीलऽवासिनीम् ॥ २ ॥ व्वन्नीनाम्पितापितावन्नीनाम्वन्नीनाम्पितावहुर्वहुश्पितावन्नीनाम्वन्नीनाम्पितावहुः । पितावहुर्वहुश्पितापितावहुरस्यास्यवहुश्पितापितावहुरस्य । वहुरस्यास्यवहुर्वहुरस्य पुत्रःपुत्रोस्यवहुर्वहुरस्यपुत्रः । अस्यपुत्रःपुत्रोस्यास्यपुत्रश्चिश्चाचिश्चापुत्रोस्यास्यपुत्रश्चिश्चा । पुत्रश्चिश्चाचिश्चापुत्रःपुत्रश्चिश्चाकृणोतिकृणोतिचिश्चापुत्रःपुत्रश्चिश्चाकृणोति । चिश्चाकृणोतिकृणोतिचिश्चाचिश्चाकृणोतिसमनासमनाकृणोतिचिश्चाचिश्चाकृणोतिसमना । कृणोतिसमनासमनाकृणोतिकृणोतिसमनावगत्त्यावगत्त्यसमनाकृणोतिकृणोतिसमनावगत्त्य । समनावगत्त्यावगत्त्यसमनासमनावगत्त्य । अवगत्त्येत्त्यवऽगत्त्य ॥ इषुधिःसङ्काःसङ्काऽइषुधिरिषुधिःसङ्काःपृतनाःपृतनाःसङ्काऽइषुधिरिषुधिःसङ्काःपृतनाः । इषुधिरितीषुऽधिः । सङ्काःपृतनाःपृतनाःसङ्काःसङ्काःपृतनाश्चचपृतनाःसङ्काःसङ्काःपृतनाश्च । पृतनाश्चचपृतनाःपृतनाश्चसर्व्वाःसर्व्वाश्चपृतनाःपृतनाश्चसर्व्वाः । चसर्व्वाःसर्व्वाश्चचसर्व्वाःपृष्ठेपृष्ठेसर्व्वाश्चचसर्व्वाःपृष्ठे । सर्व्वाःपृष्ठेपृष्ठेसर्व्वाःसर्व्वाःपृष्ठेनिनद्धोनिनद्धःपृष्ठेसर्व्वाःसर्व्वाःपृष्ठेनिनद्धः । पृष्ठेनिनद्धोनिनद्धःपृष्ठेपृष्ठेनिनद्धोजयतिजयतिनिनद्धःपृष्ठेपृष्ठेनिनद्धोजयति । निनद्धोजयतिजयतिनिनद्धोनिनद्धोजयतिप्प्रसूतःप्प्रसूतोजयतिनिनद्धोनिनद्धोजयतिप्प्रसूतः । निनद्धऽइतिनीऽनद्धः । जयतिप्प्रसूतःप्प्रसूतोजयतिजयतिप्प्रसूतः । प्रसूतऽइतिप्प्रऽसूतः ॥ ३ ॥ धानावन्तङ्करम्भिणङ्करम्भिणन्धानावन्तन्धानावन्तङ्करम्भिणमपूपवन्तमपूपवन्तङ्करम्भिणन्धानावन्तन्धानावन्तङ्करम्भिणमपूपवन्तम् । धानावन्तमितिधानाऽवन्तम् । करम्भिणमपूपवन्तमपूपवन्तङ्करम्भिणङ्करम्भिणमपूपवन्तमुक्थिनमुक्थिनमपूपवन्तङ्करम्भिणङ्करम्भिणमपूपवन्तमुक्थिनम् । अपूपवन्तमुक्थिनमुक्थिनमपूपवन्तमपूपवन्तमुक्थिनम् । अपूपवन्तमित्यपूपऽवन्तम् । उक्थिनमित्युक्थिनम् ॥ इन्द्रप्प्रातःप्प्रातरिन्द्रेन्द्रप्प्रातर्ज्जुषस्वजुषस्वप्प्रातरिन्द्रेन्द्रप्प्रातर्ज्जुषस्व । प्रातर्ज्जुषस्वजुषस्वप्प्रातःप्प्रातर्ज्जुषस्वनोनोजुषस्वप्प्रातःप्प्रातर्ज्जुषस्वनः । जुषस्वनोनोजुषस्वजुषस्वनः । नऽइतिनः ॥ ४ ॥ इति घनः ॥



इत्यष्टविकृतयः समाप्ताः ॥

# वेदपारायणविधिः

श्रीवेदपुरुषाय नमः ॥ स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय संपरिस्तीर्याज्येनैताभ्यो देवताभ्यो जुहोति अग्नये सोमायेन्द्राय विश्वेभ्योदेवेभ्यः ऋषिभ्य ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै प्रज्ञायै मेधायै धारणायै श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऋषये सोमाय काण्डऋषये अग्नये काण्डऋषये विश्वेभ्योदेवेभ्यः काण्डऋषिभ्यः संहिताभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्य ऋग्गणेभ्योऽनुमत्यै स्विष्टकृते च पृथक्स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति । समाप्ते चैता यजुषा तर्पयति । एवमृग्वेदस्य काण्डर्ष्यादिवर्ज्यमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायाऽत्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानीभ्यो देवताभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य इति । ततो वेदादिमारभ्य संततमधीयीतेत्याह भगवान्बौधायनः । इति वेदपारायणोपक्रमविधिः ॥ ॥ अथ वेदपारायणे कलशप्रतिष्ठापनादिप्रकारः ॥ तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते । कलशं सुदृढं तत्र सुनिर्णिक्तं विभूषितम् । पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः । मृत्तिकाभिश्च संमिश्रवेदिमध्ये न्यसेत्ततः । पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखस्थितः । स्थापितः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः । वत्सजान्वाकृतिं दण्डमुत्तराग्रैः कुशैः कृतम् । ब्रह्मोपधाने दत्वा तं ततः स्वस्त्ययनं पठेत् । प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते । यज्ञोपवीतनैवेद्यवस्त्रचन्दकुङ्कुमैः । स्रग्धूपदीपताम्बूलैरक्षतैश्च पितामहम् । ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत् । उपध्यायश्च संपूज्यो यथापाठं पठेत्ततः । इति वेदपारायणे कलशप्रतिष्ठापनादिप्रकारः ॥

---

# अनक्षत्पारायणविधिः

श्रीः ॥ अथातोऽनक्षत्पारायणविधिं व्याख्यास्याम आसमाप्तेर्नाश्नीयात् यथाशक्ति वापः पयः फलान्योदनं वा हविष्यमल्पं भुक्त्वा तदा शेषमधीयीत । ग्रामात्प्राचीमुदीचीं वा दिशमुपगम्याग्निमुपसमाधाय परिस्तीर्येध्मं प्रदायाज्येनैताभ्यो देवताभ्यो जुहोति अग्नये सोमायेन्द्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्य ऋग्भ्यो यजुर्भ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतये अनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऋषये सोमाय काण्डऋषये विश्वेभ्योदेवेभ्यः काण्डऋषिभ्यः संहिताभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्य ऋग्गणेभ्य अनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेणं हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति । समाप्ते चैता यजुषा तर्पयति । एवमृग्वेदिनां काण्डर्ष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायात्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानिभ्यः क्षुद्रसूक्तेभ्यो महानाम्नीभ्य इति । ततो वेदादिमारभ्य संततमधीयीत नास्यान्तरानध्यायो नास्यान्तरा जननमरणे अशुची नान्तरा व्याहरेन्नान्तरा विरमेद्यावन्तमधीयीत । यद्यन्तरा विरमेत्त्रीन्प्राणायामानायम्य प्रणवं वा प्रणिधाय यावत्कालमधीयीत । ततः सर्वं निशो निशान्तरं संग्रामारण्यसलिलं प्रलोप्य परिदध्यात् । आदावन्ते च ब्राह्मणभोजनं दक्षिणादानं च दद्यात् । परातेन विधिना वेदमधीयीत स ततः पूतो वेदो भवति मनःशुद्धश्च भवति द्वाभ्यां पारायणाभ्यां ऋग्भिश्च भोजन इहाधीते अनृतेभ्यः प्रमुच्यते त्रिभिर्बहुभ्यः पातकोपपातकेभ्यः शूद्रायां रेतःसिक्त्वा गङ्गासु निमज्जंश्च भवति । चतुर्भ्यः शूद्रान्नभोजनात्तत्सेवनात्तत्स्त्रीसेवनाच्च पञ्चभिरयाज्ययाजनात्पूतो भवति । अग्राह्यग्रहणाद्ग्राह्याग्रहणादभ्यासोपासनाच्च षड्भिर्ब्राह्मणस्य लोहितकरणात्स्त्रीलोहितकरणात्पशुहननात्सुवर्णस्तेयात्संपतिसंप्रयोगाच्च सप्तभिः प्राजापत्यानां हीनाचरणात् । यज्ञोपवेधनाच्च अष्टभिश्चान्द्रायणस्यान्तरानाचरणाद्गुरुतल्पगमनाद्रजस्वलागमनाच्च नवभिः सुरापानाच्च दशभिरश्रोत्रिययाजनात् असोमपानात् अन्यायतश्च एकादशभिर्ब्राह्मणहननाद्गर्भहननाद्द्वादशभिः पूर्वजन्मेहजन्मकृतैः सर्वैः पापैः प्रमुच्यते स्वर्गलोकं गच्छति पितॄन्स्वर्गलोकं गमयति अग्निष्टोमादीन्क्रतून्यजति तैः क्रतुभिरिष्टं भवति । वेदाध्यायी सदैव स्यात्तथा हि सत्यवाक्शुचिः । यं यं कामयते कामं तं तं वेदेन साधयेत् । असाध्यं नास्ति यत्किंचिद्ब्रह्मणो हि फलं महत् ब्रह्मणो हि फलं महदिति । समाप्तौ यजुषा तर्पय-

१ निर्णिक्तं प्रक्षालितम् ।

तीति । वेदपारायणे समाप्ते एता देवताः पूर्वोक्ता अग्निसोमाद्यायजुषा तर्पयति यजुर्वेदपारायणे तस्य वेदस्य प्राधान्यमुच्यते । अथवा भूरादिव्याहृतिचतुष्टयात्मकं यजुः-शब्देन गृह्यते तेनैतदुक्तं भवति । भूर्देवांस्तर्पयामीत्यनेन प्रकारेण तर्पयित्वा अग्निसोमादींस्तर्पयेदिति । नास्यान्तरा जननमरणे अशुची इति । नाशुचिहेतुभूते इत्यर्थः । नान्तरा व्याहरेदिति । उपक्रान्तवेदपारायणमध्ये न व्याहरेन्नाध्यापयेत् तथा लौकिकवचनमपि न ब्रूयात् । विहितं नित्यनैमित्तिकं कर्मानुपयुक्त्वा वक्ति न कुर्यादित्यर्थः । निशोनिशान्तरं संग्रामारण्यसलिलं लोप्य परिदध्यादिति लोप्य छित्वा परिहार्यं वर्जयित्वेत्यर्थ इति यावत् । परिध्यात् समापयेत् । निशान्तरं निशीथः संध्या वा । सलिलं वृष्टिरुदकसमीपभूमिका वा । निशादिकालान्देशांश्च वर्जयित्वा समापयेदित्यर्थः । सततः पूतो वेदो भवतीति । वेदो भवति वेदात्मको भवति उत्कृष्टज्ञानवान्भवेदित्यर्थः । द्वाभ्यां पारायणाभ्यां ऋग्भिश्चेति । ऋग्भिः पावमानीभिः पारायणद्वयं पावमान्यश्च मिलित्वोक्तफलाय कल्प्येते इत्यर्थः । एवमुत्तरत्र पारायणत्रयं गङ्गास्नानं च मिलित्वा साधनम् । निमज्जंश्च भवति पूतो भवतीत्यर्थः । प्राजापत्यानाचरणं प्रक्रान्तप्राजापत्यानामननुष्ठानं एवं चान्द्रायणस्यानाचरणं । यज्ञोपवेधनं यज्ञविनाशः । इत्यनक्षत्पारायणविधिः ॥

---

# याज्ञवल्क्यशिक्षा

श्रीः ॥ अथातस्त्रैस्वर्यलक्षणं व्याख्यास्यामः । उदात्तश्चानुदात्तश्च स्वरितश्च तथैव च । लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च ॥ १ ॥ शुक्लमुच्चं विजानीयान्नीचं लोहितमुच्यते । श्यामं तु स्वरितं विन्द्यादग्निमुच्चस्य दैवतम् ॥ २ ॥ नीचे सोमं विजानीयात्स्वरिते सविता भवेत् । उदात्तं ब्राह्मणं विन्द्यान्नीचं क्षत्रियमुच्यते ॥ ३ ॥ वैश्यं तु स्वरितं विन्द्याद्भारद्वाजमुदात्तकम् । नीचं गौतममित्याहुर्गार्ग्यं च स्वरितं विदुः ॥ ४ ॥ विन्द्यादुदात्तं गायत्रं नीचं त्रैष्टुभमुच्यते । जागतं स्वरितं विन्द्यादत एवं नियोगतः ॥ ५ ॥ गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः । त एव वेदे विज्ञेयास्त्रय उच्चादयः स्वराः ॥ ६ ॥ उच्चौ निषादगान्धारौ नीचौ ऋषभधैवतौ । शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः ॥ ७ ॥ षड्जो वेदे शिखण्डिः स्यादृषभः स्यादजामुखे । गवा रम्भन्ति गान्धारं कौञ्चश्चैव तु मध्यमम् ॥ ८ ॥ कौकिलः पञ्चमो ज्ञेयो निषादं तु वदेद्गजः । आश्वश्च धैवतो ज्ञेयः स्वराः सप्त विधीयते ॥ ९ ॥ निमेषमात्रः कालः स्याद्विद्युत्कालस्तथापरे । अक्षरातुल्ययोगाच्च मतिः स्यात्सोमशर्मणः ॥ १० ॥ सूर्यरश्मिप्रतीकाशात्कणिका यत्र दृश्यते । अणवस्य तु सा मात्रा मात्रा च चतुराणवा ॥ ११ ॥ मानसे चाणवं विन्द्यात्कण्ठे विन्द्याद्द्विराणवम् । त्रिराणवं तु जिह्वाग्रे निःसृतं मात्रिकं विदुः ॥ १२ ॥ अवग्रहे तु कालः स्यादर्धमात्रा विधीयते । पदयोरन्तरे काल एकमात्रा विधीयते ॥ १३ ॥ ऋचोर्धे तु द्विमात्रः स्यात्त्रिमात्रः स्यादृगन्तके । रिक्तं तु पाणिमुत्क्षिप्य द्वे मात्रे धारयेद्बुधः ॥ १४ ॥ एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् ॥ १५ ॥ विवृतौ चावसाने च ऋचोर्धे च तथापरे । पदे च पादसंस्थाने शून्यहस्तं विधीयते । प्रणवं तु प्लुतं कुर्याद्व्याहृतीर्मातृका विदुः ॥ १६ ॥ चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत् । शिखी वदति त्रिमात्रां मात्राणामिति संस्थितिः ॥ १७ ॥ वर्णो जातिश्च मात्रा च गोत्रं छन्दश्च दैवतम् । एतत्सर्वं समाख्यातं याज्ञवल्क्येन धीमता ॥ १८ ॥ हस्तौ तु संयतौ धार्यौ जानुभ्यामुपरि स्थितौ । गुरोरनुमतं कुर्यात्पठन्नान्यमतिर्भवेत् ॥ १९ ॥ ऊरुभागे तृतीये तु करं विन्यस्य दक्षिणम् । प्रसन्नमानसो भूत्वा किंचिन्निम्नमधोमुखम् ॥ २० ॥ प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । सावित्रीं चानुपूर्व्येण ततो वेदान्समारभेत् ॥ २१ ॥ कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दृढं मनः । स्वस्थः प्रशान्तो निर्भीको वर्णानुच्चारयेद्बुधः ॥ २२ ॥ नाभ्याहन्यान्न निर्हन्यान्न गायेन्नैव कम्पयेत् । यथैवोच्चारयेद्वर्णांस्तथैवैतान्समापयेत् ॥ २३ ॥ निवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयेत् । सममुच्चारयेद्वर्णान्हस्तेन च मुखेन च ॥ २४ ॥ स्वरश्चैव तु हस्तश्च द्वावेतौ युगपद्भवेत् । हस्तभ्रष्टः स्वरभ्रष्टो न वेदः फलमश्नुते ॥ २५ ॥ न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः । गद्गदो बद्धजिह्वश्च न वर्णान्वक्तुमर्हति ॥ २६ ॥ प्रकृतिर्यस्य कल्याणी दन्तष्ठौ यस्य शोभनौ । प्रगल्भश्च विनीतश्च स वर्णान्वक्तुमर्हति ॥ २७ ॥ शङ्कितं भीतमुद्धृष्टमव्यक्तमनुनासिकम् । काकस्वरं मूर्ध्निगतं तथा स्थानविवर्जितम् ॥ २८ ॥ विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालुहीनं च पाठदोषाश्चतुर्दश ॥ २९ ॥ संहितासारबहुलः पदसंज्ञासमाकुलः । क्रमसंधिसमाकीर्णो दुस्तरो मन्त्रसागरः ॥ ३० ॥ ऋक्संहितां त्रिरभ्यस्य यजुषां वा

समाहितः। साम्नां वा सरहस्यं च सर्वपापैः प्रमुच्यते ॥३१॥ संहिता नयते सौर्यं पदं च शशिनः पदम्। क्रमश्च नयते सूक्ष्मं यत्तत्पदमनामयम् ॥ ३२ ॥ कालिन्दी संहिता ज्ञेया पदयुक्ता सरस्वती। क्रमेणावर्तयेद्गङ्गा शंभोर्वाणी तु नान्यथा ॥ ३३ ॥ यथा महाह्रदं प्राप्य क्षिप्तो लोष्टो विनश्यति। एवं दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥ ३४ ॥ आम्रपालाशबिल्वानामपामार्गशिरीषयोः। वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥ ३५ ॥ खदिरश्च कदम्बश्च करवीरकरञ्जकौ। एते कण्टकिनः पुण्याः क्षीरिणस्तु यशस्विनः ॥ ३६ ॥ तेनास्यकरणे सूक्ष्मं माधुर्यं चैव जायते। त्रिफला लवणाक्तेन भक्षयेच्छिष्यकः सदा। क्षीणमेधाजनन्येषा स्वरवर्णकरी तथा ॥ ३७ ॥ हस्तहीनं तु योऽधीते मन्त्रं वेदविदो विदुः। न साधयति यजूꣳषि भुक्तमव्यञ्जनं यथा ॥३८॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्। ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ ३९ ॥ ऋचो यजूꣳषि सामानि हस्तहीनानि यः पठेत्। अनृचो ब्राह्मणस्तावद्यावत्स्वारं न विन्दति ॥ ४० ॥ ज्ञातव्यश्च तथैवार्थो वेदानां कर्मसिद्धये। पठन्मात्रापपाठात्तु पङ्के गौरिव सीदति ॥४१॥ स्वरवर्णप्रयुञ्जानो हस्तेनाधीतमाचरन्। ऋग्यजुःसामभिः पूतो ब्रह्मलोकमवाप्नुयात् ॥ ४२ ॥ न कुर्वीत पदं दीर्घं न कुर्वीत विलम्बितम्। पदस्य ग्रहमोक्षौ च यथा शीघ्रगतिर्हयः ॥ ४३ ॥ आगमं कुरु यत्नेन कारणं हि तदात्मकम्। आस्येन च शयं कुर्यात्पठन्नान्यमतिर्भवेत् ॥ ४४ ॥ न चास्य मुष्टिबन्धी स्यान्न चाप्युत्तममाचरेत्। चुलुनौका स्फुटो दण्डी स्वस्तिको मुष्टिराकृतिः। एते वै हस्तदोषाः स्युः परशुश्चैव सप्तमः ॥४५॥ यथा वाणी तथा पाणी रिक्तं तु परिवर्जयेत्। यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति ॥ ४६ ॥ यथा धनुष्याविततं शरे क्षिप्ते पुनर्गुणः। स्वस्थानं प्रतिपद्येत तद्वद्धस्तगतः स्वरः ॥ ४७ ॥ उत्तानं सोन्नतं किंचित्सुव्यक्ताङ्गुलिरञ्जितम्। स्वरविद्धं करं कुर्यात्प्रादेशोद्देशगामिनम् ॥ ४८ ॥ अङ्गुष्ठस्योत्तरे पर्वे तर्जन्योपरि यद्भवेत्। प्रादेशस्य तु सोद्देशस्तन्मात्रं चालयेत्करम् ॥ ४९ ॥ मनुष्यतीर्थोच्चं कृत्वा पितृतीर्थोदकं व्रजेत्। नामितं करपृष्ठे तु सुव्यक्ताङ्गुलिमोक्षणम् ॥ ५० ॥ स्वरिते त्र्यङ्गुलं विन्द्यात्क्षिपाते तु षडङ्गुलम्। उत्थाने तु नवाङ्गुल्यमेतत्स्वरस्य लक्षणम् ॥ ५१ ॥ अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्। शिष्याणामुपदेशार्थं कुर्याद्वृत्तिं विलम्बिताम् ॥५२॥ ऐन्द्री तु मध्यमा वृत्तिः प्राजापत्या विलम्बिता। अग्निमारुतयोर्वृत्तिः सर्वशास्त्रेषु निन्दिता ॥५३॥ मुष्ट्याकृतिर्मकारे तु नकारे तु नखाग्रतः। अनुस्वारेऽङ्गुष्ठक्षेप ऊष्मान्तेऽङ्गुलिमोक्षणम् ॥ ५४ ॥ उदात्तं भुवि पातेन प्रचयं नोम्र एव च। शेषं षडङ्गुलं विन्द्यान्निचितं तु विधीयते ॥ ५५ ॥ षडङ्गुलं तु जात्यस्य हस्तस्यानुपथस्य च। तच्चतुर्भागमात्रं तु हस्तस्तेनैव वर्तयेत् ॥५६॥ ककारान्ते टकारान्ते ङणे चाङ्गुलि नामयेत्। पञ्चाङ्गुल्यमकारे च तकारे कुण्डलाकृतिः ॥ ५७ ॥ ऊर्ध्वक्षेपाच्च योष्मा च अधःक्षेपाच्च यो भवेत्। एकैकमुत्सृजेद्धीरः स्वरिते तूभयं क्षिपेत् ॥ ५८ ॥ अङ्गुष्ठाकुञ्चनं लब्धौ अनुस्वारे त्वपाꣳरसम्। दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्तितः ॥५९॥ तर्जन्यङ्गुष्ठयोः स्पर्शोऽप्युदात्तं प्रतिविद्यते। नीचं तु मध्यमं कुर्याच्छेषं नीचतरं क्रमात् ॥ ६० ॥ स्वरितं यद्भवेत्किंचिद्धकारसहसंयुतम्। ऊष्माणं तद्विजानीयान्निक्षिपेदुभयोरपि ॥ ६१ ॥ स्वरिते च विनिक्षिप्ते संयोगो यत्र दृश्यते। द्विमात्रिके भवेदेकमात्रिके तूभयं क्षिपेत् ॥६२॥ जात्ये च स्वरिते चैव वकारो यत्र दृश्यते। कर्तव्यस्तूभयोः क्षेपो वायव्य इति दर्शनम् ॥ ६३ ॥ शृङ्गवद्वाथ वत्सस्य कुमारीकुचयुग्मवत्। उभक्षेपस्वरो यत्र स विसर्ग उदाहृतः ॥६४॥ विसर्गान्तस्वरो यत्र स्वरितो यत्र दृश्यते। दीर्घश्चैव तुकारश्च तत्रोभक्षेप उच्यते ॥ ६५ ॥ त्रिविधस्तु भवेदूष्मा प्रचिता बलकान्तरा। स्वरिते प्रचितां विद्यान्निपाते बलकां विदुः ॥ ६६ ॥ उत्थाने तु तथा तारा एताभिस्त्रिभिरूष्मभिः। मात्रामात्रां विदित्वा तु ततः क्षेपं प्रयोजयेत् ॥ ६७ ॥ अक्षरं भजते काचित्काचिद्वित्ते प्रतिष्ठिता। समाने जातिका काचित्काचिदूष्मप्रदायिका ॥ ६८ ॥ यथा बालस्य सर्पस्य उच्छ्वासो लघुचेतसः। एवमूष्मा प्रयोक्तव्यो हकारः परिवर्जितः ॥ ६९ ॥ विवृतिं प्रलया ऊष्मां प्रवदन्ति मनीषिणः। तामेव प्रतिषेधन्ति आईऊए इति निदर्शनम् ॥ ७० ॥ अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव तु लक्षणम्। जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च तथापरः ॥ ७१ ॥ पादवृत्तस्तथा भाव्य इतिस्वराः। एकपदे नीचपूर्वः सयवो जात्यः एकपद इत्याह ॥ ७२ ॥ नीचपूर्वः सयकारवकारौ वा जात्यः स्वरितो भवति। यथाजात्यं मनुष्यानिति सुधेति चस्त्रीव धान्यम् कन्या इव स्वः वीर्यं एवꣳह्याह यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति। एओ आभ्यामुदात्ताभ्यामकारो रिफितश्च यः। अकारो यत्र लुप्येत तं चाभिनिहितं विदुः ॥७३॥ यथा कुक्कुटः–असि कुक्कुटोसि। वेदः–असि वेदोसि। भागः–असि भागोसि। मारुतः–असि मारुतोसि। श्वात्रः–असि श्वात्रोसि। ते–अप्सरसाम् तेप्सरसाम्। ते–अवन्तु तेवन्तु। कः–असि कोसि। सः–अहं सोहं। एवꣳहि यानि चान्यानीदृग्लक्षणानि पदानि भवन्ति। इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित्। अनुदात्ते पदे नित्यं विन्द्यात्क्षैप्रस्य लक्षणम् ॥ ७४ ॥ यथा त्रि–अम्बकम् त्र्यम्बकम्। द्रु–अन्नः द्रुन्नः। वीडु–अङ्गः वीड्वङ्गः। वाजी–अर्वन् वाज्यर्वन्। एवꣳह्याह यानि०। इकारो यत्र दृश्येत इकारेणैव संयुतः। उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वरः ॥ ७५ ॥ अभि–इन्धताम् अभीन्धताम्। अभि–इमं अभी-

मम् । वि–इहि वीहि । सुचि–इव सुचीव । चम्री–इव चम्वीवेति । एवमाह यानि चान्यानि० । उदात्तपूर्वं यत्किंचिच्छन्दसि स्वरितं पदम् । एष सर्वं बहुस्वारस्तैरो व्यञ्जन उच्यते ॥ ७६ ॥ इडे रन्ते हव्ये काम्ये चन्द्रे ज्योते अदिति सरस्वति महि विश्रुतीति भवन्ति । एवमाह यानि० भवन्ति । अवग्रहात्परो यस्तु स्वरितः स्यादनन्तरम् । तैरो विरामं तं विन्द्यादुदात्तो यद्यवग्रहः ॥७७॥ यथा गोमदिति गो–मत् । गोपताविति गो–पतौ । प्रप्रेति प्र–प्र । वितत्तेति वि–तता । समिद्ध इति सम्–इद्धः । एवमाह यानि० भवन्ति । स्वरेति स्वरिते चैव विवृतिर्यत्र दृश्यते । पादवृत्तो भवेत्स्वारः श्विन्न आदित्येति निदर्शनम् । श्विन्नः–आदित्यानाम् श्विन्न आदित्यानां । पुत्रः–ईधे–पुत्रईधे । दात्रे–एधि दात्रएधि । कः–ईम् कईम् । ताः–अस्य ताअस्य । एवमाह यानि० । उदात्ताक्षरयोर्मध्ये भवेन्नीचस्त्ववग्रहः । तथा भाव्यं भवेत्कम्पस्तनूनप्त्रेति निदर्शनम् ॥ ७८ ॥ यथा तनूनप्त्र इति तनू–नप्त्रे । तनूनपादिति तनू–नपात् । तनूनपातमिति तनू–नपातम् । एवमाह यानि पदानि लक्षणानि भवन्ति । इत्यष्टपदसमाम्नाये वैशेषिके याज्ञवल्क्यवचनानां पदानां पाठः समाप्तः ॥

माध्यंदिनविरोधि स्यात्तथा भाव्यस्तु यः स्मृतः । स्वरो नैवात्र दृश्येत भिन्नोदात्तानुदात्तकौ ॥ १ ॥ स्वराः स्पर्शान्तःस्थोष्माणः । कण्ठ्यजिह्वामूलीयतालव्यमूर्धन्यदन्त्योष्ठ्ययमा विसर्जनीयनिपाताद्याश्च किंवर्णदैवत्यलिङ्गाः स्वराः शुक्लाः नानादैवत्याः । स्पर्शाः कृष्णाः । कपिला अन्तस्थाः । ऊष्माणोऽरुणाः । नीला यमाः । हरिता नासिक्याः । पीतोऽनुस्वारः । रक्तो जिह्वामूलीयः । पीत उपध्मानीयः । श्वेतो विसर्जनीयः । शबलो रङ्गः । नीलोऽनुनासिक्यः । इत्यन्तर्मध्यमयोर्नासिक्यं विद्यात् । द्विरुदात्ताख्या इति स्मृतः । उदमनुदनिपाते आद्ये चोपसर्गे नामाख्याते चोपसर्गनिपाताश्चेति किंदैवत्याः । अक्षराणां च के पुरुषाः काः स्त्रियः कानि नपुंसकानीत्यत्र ब्रूमः । कण्ठ्या आग्नेया अकारादयः । जिह्वामूलीया नैर्ऋत्याः ककारादयः । तालव्याः सौम्याश्चकारादयः । वायव्या मूर्धन्याष्टकारादयः । रौद्रा दन्त्यास्तकारादयः । औष्ठ्या आश्विन्याः पकारादयः । शेषा वैश्वदेवाः अं इत्येवमादयः । स्वरास्तु ब्राह्मणा ज्ञेया वर्गाणां प्रथमाश्च ये । द्वितीयाश्च तृतीयाश्च चतुर्थाश्चापि भूमिपाः ॥ २ ॥ वर्गाणां पञ्चमा वैश्या अन्तस्थाश्च तथैव च । ऊष्माणश्च हकारश्च शूद्रा एव प्रकीर्तिताः ॥३॥ शुक्लवर्णानि नामानि आख्याता रोहिता मताः । कपिञ्जलास्तूपसर्गाः कृष्णाश्चैव निपातकाः ॥ ४ ॥ भार्गवगोत्राणि नामानि भारद्वाजा आख्याताः । वासिष्ठा उपसर्गास्तु निपाताः काश्यपाः स्मृताः । पीतवर्णश्चोपसर्गो निपातः कृष्णवर्णकः । सर्वं तु साम्यमाख्यातं नाम वायव्यं दृश्यते । आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥५॥ प्रथमाश्च तथान्तस्थाः स्त्रीलिङ्गाः परिकीर्तिताः । शेषाक्षराणि षण्ढानि प्राहुर्लिङ्गविवेचकाः ॥ ६ ॥ नाम्नामिन्द्रो देवता वरुणः उपसर्गाणामादित्यः सर्वस्याक्षरगणस्य स्वरा विसर्जनीयो यमाश्च पुंल्लिङ्गाः । ङञणनमा यरलवाः स्त्रीलिङ्गाः । शेषाण्यक्षराणि नपुंसकलिङ्गानीति । संधिश्चतुर्विधो भवति लोपागमौ वर्णविकारः प्रकृतिभावश्चेति । तद्यथा–तत्र लोपो भवति अयक्ष्माः–मा अयक्ष्मामा । शततेजाः–वायुः शततेजावायुः । तिग्मतेजाः–द्विपतः तिग्मतेजाद्विपतः ॥ इति लोपः ॥ आगमो भवति–यथा प्रत्यक् सोमः प्रत्यङ् सोमः प्राक्सोमः प्राङ्सोमः अस्मान् सीते अस्मान्त्सीते ॥ त्रीन् समुद्रान् त्रीन्त्समुद्रान् । इति आगमः । विकारो भवति आ–इदम् एदम् । आ–इमे एमे । आ–इष्टयः एष्टयः । प्र–इषितः प्रेषितः इति विकारः प्रकृतिभावः यथा–आशुः शिशानः । युञ्जानः प्रथमम् । अदितिः षोडशाक्षरेण । देवो वः सविता । इति प्रकृतिभावः ॥ आकाशस्था यथा विद्युत्स्फुटितं मणिसूत्रवत् । एष च्छेदो विवृतीनां यथा बालेषु कर्तरी ॥ ७ ॥ द्वयोस्तु स्वरयोर्मध्ये संधिर्यत्र न दृश्यते । विवृतिस्तत्र विज्ञेया यईशेति निदर्शनम् ॥ ८ ॥ पिपीलिका पाकवती तथा वत्सानुसारिणी । वत्सानुसंसृता चैव चतस्रस्तु विवृत्तयः ॥ ९ ॥ पञ्च रङ्गाः प्रवर्तन्ते घातनिर्घातवज्रिणः । अहरप्रहरो ज्ञेय अइउऋओ इति निदर्शनम् ॥ १० ॥ पिपीलिका आद्यन्तदीर्घा नाभ्या आसीदिति निदर्शनम् । पाकवत्युभयोर्ह्रस्वा विन इन्द्रेति निदर्शनम् ॥ ११ ॥ अन्ते च वत्सानुसृजताताऽनेत्यसौ आवोढमश्विनेति नि० । वत्सानुसारिणी चादौ दीर्घा ताअस्येति नि० ॥ १२ ॥ करिणी कुर्विणी चैव हरिणी हारिणीति च । तथाहंसपदा नाम पञ्चैताः स्वरभक्तयः ॥ १३ ॥ करिणी रहयोर्योगे कुर्विणी लहकारयोः । हरिणी रषयोर्योगे हारितं ऋषकारयोः ॥ १४ ॥ या तु हंसपदा नाम सा तु रेफषकारयोः । हरिणी हरयोर्विद्यात्कुर्विणी लहकारयोः ॥ १५ ॥ देवं बर्हिरिति करिणी उपह्वरेति कुर्विणी । हरिणी अरेपस इत्याहुर्हारिणी शतवल्शेति च ॥ १६ ॥ वर्षोवर्षीयतेसीति तथा हंसपदेति च । स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान्परिवर्जयेत् ॥ १७ ॥ इकारं चाप्युकारं च ग्रस्तदोषं तथैव च । एतल्लक्षणमाख्यातं याज्ञवल्क्येन धीमता ॥ १८ ॥ सम्यक् पाठस्य सिद्ध्यर्थं शिष्याणां हितकाम्यया । अर्धमात्रास्वरं किंचित्पृथक्न्यूनमिवोच्चरन् । ऋकारे च हकारे च हृत्कण्ठमनसानि च ॥ १९ ॥ नैतत्स्वरितपूर्वाङ्गे नापराङ्गे कथंचन । न स्वरे न च मात्रायां कथं स्वारो विधीयते ॥२०॥ पराङ्गस्य तु यत्पूर्वं पूर्वाङ्गस्य तु यत्परम् । उभयार्धार्धसंयोगे स्वारं कुर्वीत लक्षणम् ॥ २१ ॥ संयोगे तु परं स्वार्थं परं संयोगनास-

कम् । संयुक्तस्य तु वर्णस्य न स्वार्थं पूर्वमक्षरम् ॥ २२ ॥ उदात्तेप्यनुदात्ते तु वामाया भ्रुव आरभेत् । उदात्तात्स्वरितोदात्तौ क्रमाद्दक्षिणतो न्यसेत् ॥ २३ ॥ स्वरितादनुदात्ता ये प्रचयांस्तान्प्रचक्षते । एकस्वरंरापिचाता(?)नाहुस्तत्वार्थचिन्तिकाः ॥ २४ ॥ प्रचयो यत्र दृश्येत तत्र हन्यात्स्वरं बुधः । स्वरितः केवलो यत्र मृदुस्तत्र निपातयेत् ॥ २५ ॥ दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः । एवं व्यञ्जनमासाद्य अकारो हरते स्वरम् ॥ २६ ॥ उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा । अक्षरात्तुल्ययोगाच्च नीचे नीचगतानि च ॥ २७ ॥ स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च । स्वरप्रधानैस्तैः स्वार्यं व्यञ्जनं तेन सस्वरम् ॥ २८ ॥ व्यञ्जनान्यनुवर्तन्ते यत्र तिष्ठति स स्वरः । स्वरप्रधानं त्रैस्वर्यमाचार्याः प्रवदन्ति हि ॥२९॥ मणिवद्व्यञ्जनं विद्यात्सूत्रवच्च स्वरं विदुः । आचार्याः सममिच्छन्ति पदच्छेदं तु पण्डिताः ॥ ३० ॥ स्त्रियो मधुरमिच्छन्ति विकृष्टमितरे जनाः । उदात्तं नानुवर्तन्ते नीचं न स्वरितं तथा ॥ ३१ ॥ विस्वरं तं विजानीयाद्दीर्घह्रस्वविवर्जितम् । हरिवरुणवरेण्येषु धारापुरुषेषु च । स्वरिते रेफवैश्वानरो नकारः शेपाकारः स्वरिता नकाराः ॥ ३२ ॥ द्वौ वरुणौ च स्वरितौ । उदुत्तमं वरुणधारयंवरोरुधारा उरुधारा च होइते(?) । मात्रिकं वा द्विमात्रं वा स्वरितं यदिहाक्षरम् । तस्यादितोऽर्धमात्रा वै शेषं च परतो भवेत् ॥ ३३ ॥ नकारान्ते पदे पूर्वे इमश्रुभिः परतः स्थिते । छकारं न प्रयुञ्जीत नशसंधिं समुच्चरेत् ॥ ३४ ॥ ओकारं द्रुतविज्ञेयं द्रुतमभ्रा द्वितीयकम् । लार्जी छार्चीं तृतीयं च विवेशेति चतुर्थकम् ॥ ३५ ॥ अधःस्विदासीत्पञ्चमं चोपरिस्विदासीच्च षष्ठकम् । सप्तमं तु भ्रुवोः स्मार अष्टमं नैव विद्यते ॥ ३६ ॥ उच्चस्थानगते ह्रस्वे स्वरितं नोपपद्यते । अधस्था तु यदा गच्छेत्स्वरितं न तदा भवेत् । कचटतपा दृश्यन्ते संधिस्थानेषु नित्यशः । स्ववर्गेणैव संयुक्ता मोक्षं तत्र न कारयेत् । तकारान्ते पदे पूर्वे सकारे परतः स्थिते । प्रत्यारम्भं न कुर्वीत पापाविति निदर्शनम् । ककारान्ते पदे पूर्वे सकारे परतः स्थिते । खसवर्णं विजानीयात् भिखक्सेति निदर्शनम् । तकारान्ते पदे पूर्वे चवर्गे परतः स्थिते । मोक्षं तत्र च कुर्वीत यच्च पापौ निदर्शनम् । ङकारान्ते पदे पूर्वे सकारे परतः स्थिते । कसवर्णं विजानीयात्प्राङ्सोमेति निदर्शनम् । टकारान्ते पदे पूर्वे सकारे परतः स्थिते । टसवर्णं विजानीयात्संम्राट् संभृतेति निदर्शनम् । तकारान्ते पदे पूर्वे सकारे परतः स्थिते । छसवर्णं विजानीयात् तत्सवितुरिति निदर्शनम् । नकारान्ते पदे पूर्वे सकारे परतः स्थिते । तसवर्णं विजानीयाग्नीन्त्समुद्रेति निदर्शनम् । पकारान्ते पदे पूर्वे शकारे परतः स्थिते । छासवर्णं विजानीयादनुष्टुप्छारदीति निदर्शनम् । मकारान्ते पदे पूर्वे सवर्णे परतः स्थिते । मसवर्णं विजानीयादिमंमेति निदर्शनम् । वर्णे तु मात्रिके पूर्वे अनुस्वारो द्विमात्रकः । द्विमात्रे मात्रिको ज्ञेयः संयोगाद्यस्य यो भवेत् । अनुस्वारो द्विमात्रः स्याद्दवर्णव्यञ्जनादिगः । ह्रस्वाद्वा यदि वा दीर्घाद्देवानाꣳहृदयेभ्य इति । अनुस्वारस्योपरिष्टात्संवृतं यत्र दृश्यते । दीर्घं तं तु विजानीयाच्छ्रोताग्रावाणेति निदर्शनम् । अनुस्वारस्योपरिष्टात्संयोगो यत्र दृश्यते । ह्रस्वं तं तु विजानीयात्त्सꣳस्थेति निदर्शनम् । अनुस्वारश्च यो दीर्घादक्षराच्च भवेत्परः । स तु ह्रस्व इति ज्ञेयो मन्त्रेष्वेव विभाषया । ओभावश्च विवृत्तिश्च शषसा रेफ एव च । जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः । यथा भावप्रसंधानमुकारादिपरं पदम् । स्वरान्तं तादृशं विद्याद्यन्यद्व्यक्तमूष्मणः । उभावादुत्थितश्चोष्मा तां तु केलिं विनिर्दिशेत् । विवृतं प्रति या ऊष्मा विज्ञेया विकटानना । लीढातिलीढविद्युच्च शषसेषु प्रकीर्तिताः । जिह्वामूले च रेफे च विज्ञेया विठकाशठा । उपध्मानीयसहिता पुष्पिणीं तां विनिर्दिशेत् । अन्यत्र यो भवेदूष्मा सुलभां तां विनिर्दिशेत् । पादाद्यन्तं पदाद्यन्तं तथावग्रहकालिकम् । ईषत्स्पृष्टं विजानीयात्तस्मिन्काले तु कारयेत् । पादादौ च पदादौ च संयोगावग्रहेषु चा । यः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः । उपसर्गपरो यस्तु पदादिरपि दृश्यते । ईषत्स्पृष्टं यथा विद्युत्पदच्छन्दात्परं भवेत् । त्वदर्थवाचिनौ वोवां वावै यदि निपातजौ । आदेराजविकल्पार्थौ ईषत्स्पृष्टा इति स्मृताः । विभाषायामेकारः स्यात्तथा नेतैः पदात्परः । भवन्तेत्यपि पूर्वैव तथा च स पदादपि । यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् । यत्र यत्र विशेषः स्यादिदानीं स स कथ्यते । वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूत्तरः । आदौ गुरुर्लघुर्मध्ये पदान्ते तु लघूत्तरः । उपांशु स्वरितं चैव योऽधीते हृदि संज्ञकः । अपि रूपसहस्रेषु सदेहेषु प्रवर्तते । पञ्चविधां न गृह्णन्ति जडाः स्तब्धाश्च ये नराः । आलस्याश्चैव रोगाश्च येषां च विस्मृतं मनः । अहिरिव गुणाद्भीतः संमानान्नरकादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति । न भोजनविलम्बी स्यान्न च नारीनिबन्धनः । सुदूरमपि विद्यार्थी व्रजेद्गरुडहंसवत् । यथा खनन्खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति । सुखार्थी चेत्त्यजेद्विद्यां विद्यार्थी चेत्त्यजेत्सुखम् । सुखिनस्तु कुतो विद्या सुखं विद्यार्थिनः कुतः । गुणिता शतशो विद्या सहस्रावर्तिता पुनः । आगमिष्यति जिह्वाग्रे स्थलनिम्नमिवोदकम् । शतेन गुणिता विद्या सहस्रेण च तिष्ठति । शतानां च सहस्रेण प्रत्यग्रवदवतिष्ठति । जलमभ्यासंयोगेन शिलायाः कुरुते क्षयम् । कर्कीर्णामृदुतस्तस्य किमभ्यासान्न साध्यते । गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नोपलभ्यते । शुश्रूषारहिता विद्या ह्यल्पमेधागुणैः सह । वन्ध्या च यौवनी यद्वा न विद्या फलिनी भवेत् ।

हयानामिव जात्यानामर्धमात्रार्धशायिनाम् । न हि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति । यथा पिपीलिकाभिः पांसुभिर्वल्मीकं क्रियते महत् । न तत्र बलसामर्थ्यमुद्यमस्तत्र कारणम् । अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु । अन्नव्यञ्जनयोर्भागस्तृतीयमुदकस्य च । वायोः संचारणार्थाय चतुर्थमुपकल्पयेत् । हकारं पञ्चमैर्युक्तमन्तस्थैश्चापि संयुतम् । औरस्यं तं विजानीत्कण्ठ्यमाहुरसंयुतम् । हकारो यत्र पूर्वस्थो ह्यन्तस्थाद्यो भवेत्परः । पदकाले वियुज्येत संहितायां स औरसः । मेघदुन्दुभिनिर्घोषो ज्ञायते पयसो ह्रदात् । एवं नादं प्रयोक्तव्यं सिंहस्य रुदितं यथा । माले भाद्रपदे मेघाः शब्दं कुर्वन्ति यादृशम् । एवं गह्वरमासाद्य शुक्रं दुदुहेति दर्शनम् । शेपाणां वानरा युद्धमुत्पतन्ति पतन्ति च । एवं वर्णाः प्रयोक्तव्या इहेहैषां निदर्शनम् । यथा पुत्रवती स्नेहाचुम्बते निजमौरसम् । एवं वर्णाः प्रयोक्तव्या युञ्जानेति निदर्शनम् । दुर्दरो जयदेशे च प्रफतेपुर्नयाप्यया(?) । एवं वर्णाः प्रयोक्तव्या अपां फेनेति निदर्शनम् । यथा भारभराक्रान्ता निश्वसन्ति नरा भुवि । एवं वर्णाः प्रयोक्तव्या अग्र्यः संभृत इत्यपि । कुक्कुटः कामलुब्धश्च ककारद्वयमुच्चरेत् । एवं वर्णाः प्रयोक्तव्याः कुक्कुटोसीति दर्शनम् । वडवा च हयं दृष्ट्वा योनिं विकुरुते यथा । एवं वर्णाः प्रयोक्तव्याः सदुन्दुभेति दर्शनम् । रङ्गे चैव समुत्पन्ने नो ग्रसेत्पूर्वमक्षरम् । स्वरं दीर्घं प्रयुञ्जीत पश्चान्नासिक्यमाचरेत् । यथा सौराष्ट्रिका नारी अराँ इत्यभिभाषते । एवं रङ्गः प्रवक्तव्यो ङकारः परिवर्जितः । द्विमात्रिको मात्रिको वा नासामूलं समाश्रितः । अन्ते प्रयुज्यते रङ्गः पञ्चमैः सानुनासिकः । यथा सौराष्ट्रिका नारी अराँ इत्यभिभाषते । एवं रङ्गं विजानीयात् ङकारपरिवर्जितम् । अनन्तरं मकारस्य यो रङ्गस्तत्र रक्ष्यते । सर्वानुनासिकं विन्द्यादेषा मध्योपधानिका । यरलवशषसहरज्यन्ते चोपधानिका । गर्वान्ते रङ्गते यस्तु सर्वैः सर्वानुनासिका । नासावुत्पद्यते रङ्गः कांस्येन समनिःस्वनः । मृदुश्चैव द्विमात्रः स्याद्वृष्टिमान्स्यान्निदर्शनम् । यथा व्याघ्री हरेत्पुत्रान्दंष्ट्राभिर्न च पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् । मधुरं च न चाव्यक्तं व्यक्तं चापि न पीडितम् । सनाथस्यैकदेशस्य न वर्णाः शंकरं गताः । यथा सुमत्तनागेन्द्रः पदात्पदं निधापयेत् । एवं पदं पदाद्यन्तं दर्शनीयं पृथक् पृथक् । गीती शीघ्री शिरःकम्पी यथा लिखितपाठकः । अनर्थज्ञोल्पकण्ठश्च षडेते पाठकाधमाः । माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमत्वं च षडेते पाठका गुणाः । चतुरक्षरपङ्क्तं च निवर्तेत पुनःपुनः । आवर्तते पदं यच्च द्विस्त्रिराम्रेडितं हि तत् । यथा धाम्ने धाम्नेति यजुषे यजुषेति निदर्शनम् । हीयते वर्धते चापि पदं यत्र कृशोदरम् । उपचारः स विज्ञेय उभे सुश्चन्द्रेति निदर्शनम् ॥

अथ सप्तविधाः संयोगपिण्डाः । अयःपिण्डो दारुपिण्ड ऊर्णापिण्डो ज्वालापिण्डो मृत्पिण्डो वायुपिण्डो वज्रपिण्डश्चेति । यमान्विद्यादयःपिण्डान् सान्तस्थं दारुपिण्डवत् । अन्तस्थं यमवर्जं तु ऊर्णापिण्डं विनिर्दिशेत् । अन्तस्थं यमसंयोगे विशेषो नोपलभ्यते । अशरीरं यमं विन्यादन्तस्थः पिण्डनायकम् । ज्वालापिण्डान्सनासिक्यान्सानुस्वारांस्तु मृन्मयान् । सोपध्मा वायुपिण्डाश्च जिह्वामूले तु वज्रिणः । अयःपिण्डो नाम यथा । अग्नीः पत्नीः नातनच्मि । दारुपिण्डो नाम यथा । अश्वः सूर्यः विश्वाजतीति भवति । तत्र ऊर्णापिण्डो नाम यथा । यस्मिन् अलस्मिन् अमुष्मिन् इति भवति । तत्र ज्वालापिण्डो नाम यथा । ब्रह्मा वह्निः गृह्णामीति भवति । तत्र मृत्पिण्डो नाम यथा । साꣳस्या सꣳस्कर्तारः सꣳस्वर्तं इति । तत्र वायुपिण्डो नाम यथा । देव सवितः । युञ्जानः प्रथमम् । प्रादिवः ककुत्सुसमिति भवति । तत्र वज्रपिण्डो नाम यथा । इष्कृतिः निष्कृतिः ऋक्साम इति भवति । प्रथममेव पकारेण सकारेणैव संयुतम् । एतत्स्वरं समासाद्य अग्निष्वात्ता निदर्शनम् । प्रथमेन ठकारेण थकारेणैव संयुतम् । एतत्स्वरं समासाद्य अधिष्ठाननिदर्शनम् । प्रथममेव णकारेण नकारेणैव संयुतम् । एतत्स्वरं समासाद्य त्रिणवत्रयस्त्रिꣳशाविति निदर्शनम् । प्रथममेव रङ्गेण नकारेणैव संयुतम् । एतद्रङ्गितमासाद्य वृष्टिमानिति निदर्शनम् । एते ककारादयो मकारपर्यवसानाः कृष्णा व्याख्याताः शनैश्चरदैवत्याः । चत्वार्यन्तस्था यरलवाः कपिलवर्णा अग्निदैवत्याः । चत्वार्यूष्माणः शषसहा अरुणवर्णा आदित्यदैवत्याः । त्रयस्त्रिꣳशद्व्यञ्जनानि स्पर्शा अन्तस्था ऊष्माणश्चेति । चतुर्विधं करणं स्पृष्टमस्पृष्टं संवृतं विवृतं चेति । संवृतो घोषा विवृता अघोषाः । विꣳशतिर्घोषास्ते गजडदबा घझढधभा ङञणनमाः यरलवाश्चेति । त्रयोदश अघोषास्ते कचटतपाः खछठथफाः शषसाश्चेति । अष्टौ वर्णस्थानानि भवन्ति । उरःकण्ठ्यमूर्धन्यतालुदन्त्यजिह्वामूलयमानुनासिक्याश्चेति । द्वौ औरस्यौ हहा इति । अआआ ३ त्रयः कण्ठ्याः । षड्मूर्धन्याः ऋटठडढणष इति । दश तालव्याः चछजझञयशइईई ३ इति । अष्ट दन्त्याः तथदधनललसाः । एकादश ओष्ठ्याः पफबभममाउऊऊ ३ छडपध्माचेत्यादयः । एको दन्तमूलीयो रेफः । जिह्वामूलीयाः पञ्च कुंखुंगुंघुंङुंइति । क्मख्मग्मघ्मकुंखुंगुंघुंइति यमाश्चत्वारः । रुक्मेति प्रथमो ज्ञेयः सक्व इत्यपरो भवेत् । तृतीयः सग्न इत्याहुरुपध्मेति चतुर्थकः । प्रथमौ चौष्ठनासिक्यावोष्ठनासे उपाश्रितौ । द्वितीयः कण्ठ्यदन्त्यश्च नासामूलमुपाश्रितः । तृतीयः

